**Colophon** दानकेलिकौमुदीनाम भाणिका समाप्ता ॥ ० ॥

वर्णिता सुमन गुरुदायस्य निर्देशेन भाणिकाद्यमिदम् ।
तस्य मम प्रियसुहृद कण्ठतटी चपलमलङ्करताम् ॥
गते मनुशरे शाके चन्द्रकालसमन्विते ।
नन्दीश्वरे निवसता भाणिकेयं विनिर्मिता ॥

अथ भाणिकालक्षणम् ।

भाणिका श्लक्ष्णनेपथ्या मुखनिर्वहणान्विता ।
भारती कौशिकीवृत्तियुक्तैकाङ्कविनिर्मिता ॥
उदात्तनायिका मन्दपुरुषात्राङ्गसप्तकम् ।
उपन्यासोऽथ विन्यासो विरोध साध्वसं तथा ।
समर्पणं निवृत्तिश्च संहारश्चापि सप्तम ॥
उपन्यास प्रसङ्गेन भवेत् कार्यस्य कीर्त्तनं ।
निर्वेदवाक्यव्युत्पत्तिर्विन्यास इति कीर्त्तिते ॥
भ्रान्तिनाशो विरोध स्यान्मिथ्याख्यानन्तु साध्वसम् ।
सोपालम्भवच कोपपीड़योक्त समर्पणम् ।
निदर्शनस्योपन्यासो निवृत्तिरिति कथ्यते ।
संहार इति तत् प्राहुर्यत् कार्यस्य समापनम् ॥
शेषं नाटकवज्ज्ञेय बुधै प्रस्तावनादिकम् ।
रूपक त्रिविध पार्श्व न्येयं तत्र भाणिकेयं संयतपेति निष्ठापितम् ॥

**End** *of the Commentary* सुमनस पुष्पाणि सुमनो मनाय तस्य प्रियसुहृद श्रीराधा कुण्डनिवासिन श्रीरघुनाथदासस्येत्यर्थः ॥ ० ॥

दानकेलिकलीरम्भे राधामाधवयोर्युग
कामम्लौममदाकान्तचकोरमहं भजे ॥

**Colophon** *of the Commentary* इति श्रीदानकेलिकौमुदीटीका महती श्रीविश्वनाथ चक्रवर्त्तिना विरचितेति ॥ ० ॥ ० ॥ ० ॥ ० ॥ ० ॥

विवरणम्—पुस्तकेऽस्मिन् श्रीविश्वनाथचक्रवर्त्तिविरचितमहत्याख्याटीकासहिता श्रीरूपगोस्वामिकृतदानकेलिकौमुदीनाम्नी भाणिका वर्त्तते ।

---

No 49 दानकेलिकौमुदीभाषा । Dānakelikaumudībhāṣa. Substance, country made white paper, 1¼ × 6 inches Folia, 45 Lines,

11–14 in a page Character, Bengali Date, ? Appearance, nearly old, with different hand writings Verse. Not correct. Complete

A Bengali versification of the Dānakelikaumudi, noticed in the preceeding No by Jadunandana Dāsa.

पुस्तकेऽस्मिन्नुपरि समालोचिताया दानकेलिकौमुद्या श्रीयदुनन्दनदासकृतवङ्गीयपद्यानुवादो वर्त्तते ।

---

**No. 50. पद्यावली ।** Padyāvalī Substance, country made white paper, 15 × 3 inches Folia, 49 Lines 4–6 in a page Character, Bengali Date, ? Appearance nearly fresh Verse Generally correct. *Complete*

A collection of Sanskrit poems by Rūpa Gosvāmin on Kṛṣṇa and Rādhā from works of several Vaiṣṇava authors Such as Yogeśvara, Rūpa, Sāraṅga Śubhaṅga, Hara, Rāmānanda, Śrīdhara Svāmin, Lakṣmīdhara, Bhavānanda, *Vedavyāsa, &c. The numbers* of poems collected here are 380

**Beginning.** श्रीश्रीराधाकृष्णाभ्यां नमः ॥

पद्यावली विरचिता रसिकैर्मुकुन्द
सम्बन्धबन्धुरपदा प्रमदोर्म्मिसिन्धुः ।
रम्या समस्तजनता दमनी क्रमेण
सङ्ग्रह्यते कलितकृष्णककौतुकाय ॥ १ ॥

प्रारम्भे मङ्गलाचरणम्—

नमो नलिननेत्राय वेणुवाद्यविनोदिने ।
राधाधरसुधापानशालिने वनमालिने ॥ १ ॥ कस्यचित्
भक्तिप्रह्वविलोकनप्रणयिनी नीलोत्पलस्पर्द्धिनी
ध्यानालम्बनतां समाधिनिरतैर्नीते हितप्राप्तये ।
लावण्यैकमहानिधी रसिकतां राधादृशोस्तन्वती
युष्माकं कुरुतां भवार्त्तिशमनं नेत्रे तनुर्वा हरेः ॥ २ ॥ सारङ्गस्य
ये गोवर्द्धनमूलकन्दरभवा ये च व्रजे कृष्णया
ये वृन्दावनकुञ्जेषु व्रजवधूलीलोपधानानि च ।

ये चाभ्यङ्गसुगन्धय कुवलयापीडस्य दानाम्भसा
ते वो मङ्गलमादिशन्तु सतत कंसद्विषो बाहव ॥ ३ ॥ प्रभाकरस्य
सार्धं व्यावर्त्तमानाखिलसुरभिकुलाह्वानसङ्केतनाम्नी
न्याभीरीवृन्दचेतोहठहरणकलासिद्धमन्त्राक्षराणि ।
सौभाग्यं व समन्ताद्दधतु मधुभिद केलिगोपालमूर्त्ते
सानन्दाकृष्टवृन्दावनरसिकमृगश्रेणयो वेणुनादा ॥ ४ ॥ इरस्य

**End.** पत्येव सर्वीं प्रति राधावाक्यम्

य कौमारहर स एव हि वरस्ता एव चैत्र क्षपा
ते चोन्मीलितमालतीसुरभय प्रौढा कदम्बानिला ।
सा चैवास्मि तथापि तत्र सुरतव्यापारलीलाविधौ
रेवारोधसि वेतसीतरुतले चेत समुत्कण्ठते ॥२७७॥(1) कस्यचित्
प्रिय सोऽय कृष्ण सहचरि कुरुक्षेत्रमिलित
तथाऽह सा राधा तदिदमुभयो सङ्गमसुखम्
तथाप्यन्त खेलन्मधुरमुरलीपञ्चमजुषे
मनो मे कालिन्दीपुलिनविपिनाय स्पृहयति ॥ २७८ ॥ समाहर्त्तु

समाप्तौ मङ्गलाचरणम् ।

मुग्धे मुञ्च विषादमत्र बलभित्कम्पो गुरुस्त्यज्यतां
सद्भावं भज पुण्डरीकनयने मान्यानिमान् मानय ।
लक्ष्मीं स्फुरत स्वयम्वरविधौ भ्रमरैर्वाक्कला
दृष्ट्या प्रतिषेधमात्मनि विधि प्राप्तान् हरि पातु व ॥ २७९ ॥

विलक्षसरस्वत्या ।

माद्यद्वासरमन्दराद्रिशिखरव्याघट्टनाविस्फुरत्
केयूरा पुरहूतकुञ्जरकरप्राग्भारसम्मर्द्दिन ।
दैत्येन्द्रप्रमदाकपोलविलसत्पत्राङ्कुरच्छेदिनो
दोर्दण्डा कलिकालकल्मषहरा कंसद्विष पान्तु व ॥२८०॥ योगेश्वरस्य ।
जयदेवबिल्वमङ्गलमुखै कृता यत्र सन्ति सन्दर्भा ।
तेषा पद्यानि विना समाहृतानीतराण्यत्र ॥

---

(1) *As this śloka has no connection with the adventures of Rādhā and* Kṛṣṇa at Vṛindabana, it appears that it has been inserted among these *poems* under mistake by the scribe

**Colophon.** इति श्रीमद्रूपगोस्वामिना सङ्कलिता पद्यावली समाप्ता ।०।०। श्रीश्रीहरिः ॥ श्रीराधागोविन्दाय नमः ॥०॥०। श्रीश्रीकृष्णचैतन्यचन्द्राय नमः ॥०॥०

विवरणम् — श्रीमद्रूपगोस्वामिसङ्कलित राधाकृष्णविषयक विविधपद्यमय पद्यावलीनामकोऽयं निबन्धः ।

---

**No. 51. पञ्चाध्यायटिप्पनी ।** Pañcādhyāyaṭippanī Substance, *Foolscap paper* 17×6 *inches* *Folia,* 72 *Lines,* 11–14 *in a page* Character, Bengali Date, ? Appearance, Not fresh Prose. *Generally correct* *Complete*

An elaborate commentary on the text of Rāsa Pañcādhyāya of the Śrīmadbhāgavata and on its commentary too, based on Vaiṣṇava principles, by Karuṇāmaya for *Brajanātha Rāya*

**Beginning.** ॥ नमः श्रीकृष्णाय रासरसिकाय । तत्र टीकायां रासारम्भ इति तस्मिन् निमित्ते रासारम्भसम्बन्धिनं मान श्रीपीठार्थं कन्दर्पविजयप्रसीतेरिति कन्दर्पं कर्तृकस्येव जेतव्यस्य प्रथयादित्यर्थं । अथ मुख श्रीबादरायणिरवर्षीति वक्ष्यमाणमहामहिम प्रभुस्वाम्य यस्मात् तदिदं भगवान् यदुविकाश्रम महातपपरस्याद्भवान् श्रीबादरायण । तत्र तप श्रीकृष्णोपासनमयमेव सर्वेषुल्य तस्य परमोत्कर्षे तस्मिन्नेव व्यवसायीत्यत्यात् तस्य ताद्दश तप फलरूप एव इति सर्वदैवतश्रीभगवन्धर्मरहस्यादिकं तथापि यद्यपि स्फुरति तथापि तदाम निवर्त्तोऽद्याप्यपर्य्यवसानमपेव आनम् । ततप्राद्ममर्कोऽपेतस्तोतथ्यमिति । श्रीशुक उवाचेति पाठे तु परमोत्कर्ष प्रासाद्मात्मन परमश्रीमभावना दर्शिता । ततप्राद्मविभ्रतवैव श्रीतत्त्व मिदमिति व्यक्तिलम् । तदापि सम्यातिसद्विप्रमवलीला श्रीकृष्णचन्द्रोषा मनोरथपरिपूरणेव प्रियसाम्रभुत्पाद्यं । अथ कृष्णस्य श्रीभगवतीकृष्णस्य प्रयोजनमिति दर्शयन् तदेव तस्य सर्वोतिमाधिमुख्यमिति च प्रकटयन् तत्र च सावाभ्रमत इति श्रीबादरायणपद वसुदेवहिति नीयमानः किम भवितीति हष्टा सर्वात्मा वाचेति दुर्लभाम्रो भगवद्रूपरसमाधुर्यसम्पदामो वैचित्र्यमनुभवन् तदीयपक्षपातस्तु सम्प्रदायानुसार गमनात् प्रभ विविधविलासलहरी तथाप्यामिलापि अत्र रासकीडा पर्वेन्दुदर्शने, यद्यपि रथ्यादेवं वर्णयति ।

End — ततश्च या निरन्तरं प्रवृत्तात् । यदाकाशं स्वर्गं वर्त्तेत । शुद्धसत्त्व-
चेतन् यत्र । अपि प्रेमलक्षणा परा श्रीगोपीविशेषानुभाविन्यात् भक्तौ
समस्तानीया । यदि सर्वं कृतार्थेन लभ्या स्वर्गीयपदं कामयेति भक्त-
वशिष्ठ कामविज्ञा व्यवस्थित । तत्र परमप्रमदर्पणेन सर्वपीठान्
काम तत्त्वलक्षणसंस्थापनादि स्वर्गीयाया । यथा स्मृते ।

मद्भक्त प्रणताया न मोक्षति न काङ्क्षति ।
मम भक्तिषु भक्तेषु तत्क्षणं लभते परामिति ॥

अत तु स्वर्गीयपदप्राप्त्यात् पुनरपि परमभिमाति । तस्मात् परमेश्वरचरणे
साधनमिति भाव । श्रीर मतिरिति धैर्य्यं च लभन हर्षं । यदा कामं
सर्वेन् आपादित प्रतिबन्ध स्वर्गीयमाधि श्रीकृष्णाध्यायादिकमनवबोधा-
द्भिन्नाति तत्प्राप्तेरिति भाव । अत्र समाप्तं ॥ ० ॥

कोऽहमा वदिरलाय सर्वोऽद्यं दिन गर्भते ।
तत्र चेतसद्वयन प्रीत्ये भगवतीस्थितम् ॥ ० ॥
श्रीरामधीनदेवशर्मपिताशी
साधुनी श्रीकृष्णमेघन ।
पद्मलमश्रीकृष्णनाथ
व्यासाद्गनाथ परिवेष्टितम् ॥

श्रीहरि शरणं ॥

Colophon. — इति श्रीदक्षमगोपप्पा वशिष्ठ ॥ ० ॥ इति रामपञ्चाध्यायी समाप्ता ॥
अथ रासलीला मधुरी मनपुरन्ध्रावसामामत्तरीली दर्शितं तदीर्भा
ज्ञानेन क्रमपाप तत्प्रभावद्यमनमयन्तम ताहृशलीलावलितकृतमतमन्मन
तथा तदुपयुक्त लीलान्तरनाम एकदति तवासमानन्तर फाल्गुनमितरात्रौ
दर्शत ॥

* विवरणम्—श्रीकृष्णानन्दकृता रासपञ्चाध्यायटीप्पणस्य सम्पूर्णा वर्त्तते ।

---

**No. 52. पूजाविधिराधिकायाः ।** *Pujāvidhi Rādhikāyāḥ.* Substance country made white paper, 11 × 4 inches. Folia, 3. Lines, 5-7 in a page. Character, Bengali. Date, ? Appearance, nearly fresh, but torn in parts. Prose. Generally correct. Complete.

A guide to the worship of Rādhā. Anonymous.

9 s. c.

**Beginning.** ॥ अथ पूजाविधिर्लिख्यते । तत्रादौ आसनशुद्धिः । आसनमन्त्रस्य मेरु पृष्ठ ऋषिः सुतलं छन्दः कूर्म्मो देवता आसनोपवेशने विनियोगः । ओं

पृथ्वि त्वया धृता लोका देवि त्वं विष्णुना धृता ।
त्वञ्च धारय मां नित्यं पवित्रं कुरु चासनम् ॥

एते गन्धपुष्पे आधारशक्तिकमलासनाय नमः ।

**End.** अथ राधास्तोत्रं ॥ श्रीनारद उवाच ॥

किञ्चिद्गुह्यतरं ब्रह्मन् यच्चित्वमखिलेश्वरे ।
तन्मे वदस्व तत्त्वज्ञ यदीश मयि वत्सल ॥

ब्रह्मोवाच ।

शृणु गुह्यतमं तात नारायणमुखात् श्रुतम् ।
श्रुत्वैव पूजिता देवै राधा वृन्दावने वने ॥
राधाविश्लेषितः कृष्ण एकदा प्रेमविह्वलः ।
राधामन्त्रं जपन् ध्यायन् राधां सुव्यक्त पश्यति ।

अस्य श्रीराधास्तोत्रस्य ब्रह्मर्षिरनुष्टुप् छन्दः श्रीराधादेवता राधाप्री विनियोगः ।

अङ्के राधा वने राधा राधा पृष्ठे पुरः स्थिता ।
यत्र यत्र स्थिता राधा राधैवाराधिता मया ॥
जिह्वा राधा श्रुतौ राधा राधा नेत्रे हृदि स्थिता ।
सर्व्वाङ्ग व्यापिनी राधा राधैवाराधिता मया ॥
अर्च्चा राधा जपे राधा राधिका चादि वर्त्तने ।
मोदे राधा स्थिते राधा राधैवाराधिता मया ॥
गाने राधा गुणे राधा राधिका भोजने गतौ ।
रात्रौ राधा दिवा राधा राधैवाराधिता मया ॥
माधुर्य्ये मधुरा राधा माता मे राधिका गुरुः ।
सौन्दर्य्ये सुन्दरी राधा राधैवाराधिता मया ॥
कर्णाये राधिका कोकिलसंगीते राधिका मम ।
राधारससुधासिन्धुः राधासौभाग्यमञ्जरी ।
राधा ब्रजाङ्गनामुख्या राधैवाराधिता मया ॥
नारायणकृतं स्तोत्रं राधिकाप्रीतये परं ।
यः पठेत् प्रयतो नित्यं राधाकृष्णप्रियो भवेत् ॥ ० ॥

इति ब्रह्माण्डपुराणे ब्रह्मनारदसम्वादे राधास्तोत्रं समाप्तं ॥ ० ॥ श्रीतत्सत् ॥ ओं तत्सत् ॥ ० ॥ श्लोकक्षय । श्रेयमस्तु । श्रीरामः । सहुदासः ।

सुदामा। सुबल। अर्जुन। उज्ज्वल। वृषभ। श्रीमन्तो। ईशमध्य।
मधुव्रत। मदनेन ।१०॥ इत्यावरणद्वैतान् पूजयेत् ॥१०॥ ललिता
विशाखा चम्पकलता चन्द्ररेखा एता पूज्या ॥१०॥१०॥

विवरणम्—पुनकेऽस्मिन् राधिका पूजाविधिर्वियत।

---

No 53. पूर्व्वविभाग (गीतचिन्तामणे)। Purvavibhagah (Gita cintamaneh Substance country made white paper, 15 x 5 inches Folia, 79, of which fol 1—25 both incl ding are replaced by fresher ones) Lines, 7-12 in a page Character, Bengali Date, ? Appearance, partly fresh and partly old Verse Not correct Complete

The first half of the *Gitacintamani, a book of Bengali songs on Krisna* by Narottama Dasa

पुस्तकेऽस्मिन् नरोत्तमदासकृतस्य गीतचिन्तामणेः पूर्व्वविभागमात्र वर्त्तते।

---

No 54 प्रेमामृतं विवरणसहितम। Premamritam vivaranasahitam Substance, country made white paper, 18 x 7 inches Folia 16 Lines, 11-18 in a page Character Bengali Date, ? Appearance, very old Prose Generally correct Complete

*This codex contains the text of Premamritarasayanastotra, by* Gauranga, a poem in praise of love for Krisna with a commentary, entitled Premamritavivarana by Viththalesvara.

Beginning *of the Commentary* श्रीगोपीजनवल्लभाय नमः॥

नमस्तावत्प्रकैशोरेन्द्रवल्लभिनतात्मनो।
परस्पर प्रणयिनीर्गोपीमाधवयोर्द्वयो॥१॥
राधागीतानि नामानि मत्प्रायमदनाश्रयम्।
कथञ्चित् बालगम्यार्थं व्याख्यास्येऽथ यथामति॥२॥

एतदवसरसिकजनमन मनीषार्थं राधिकोक्तनामानि प्रकटयितुं भूमिका
रचयन्नेव नामोत्थानप्रकारमाह—एकदेति।

यद्यपीति गोप्यत्वादनुचितमेतत् प्रकाशनं नूनं ।
मद्दीयधनानुपानेच्छितमेव तथेति तदुचितम् ॥ ३ ॥
प्रायेऽ रसिकाः स्वैरं पश्यन्त्विदमहर्निशम् ।
एतद्रसानभिज्ञस्तु माद्राक्षीदपि वैष्णव ॥ ३ ॥
इति वृन्दावनाधीशचन्द्रदास्यार्थिना कृतम् ।
प्रेमामृतौषधस्यैवं विवृत्यानुपालकम् ॥ ४ ॥
इत्येव प्राणनाथस्य प्रेमामृतरसायन ।
य पठेत् शृणुयाद्वापि स प्रभुं प्रतिविंदभु वम् ॥ २५ ॥

**Colophon.** इति श्रीकृष्णचैतन्यविरचित प्रेमामृतरसायनं स्तोत्रं सम्पूर्णम् ।
इति श्रीविट्ठलेश्वरविरचितं प्रेमामृतविवरणं सम्पूर्णम् ॥ नित्यानन्दस्य कुन्तरदास्यधामवासिन श्रीमिकस्य स्वाक्षरमिदम् ॥

विवरणम्—पुस्तकेऽस्मिन् श्रीगौराङ्गकृतप्रेमामृतरसायन विठ्ठलेश्वरकृतविवरणसहित सम्पूर्णं वर्त्तते ।

---

**No. 55. प्रेमामृतरसायनस्तोत्रम् ।** Premāmṛitarasāyanastotram Substance, Foolscap paper, 14 x 4 inches Folia, 5 Lines 7 in a page Character, Bengali Date, ? Appearance, nearly fresh Verse Not correct Complete

Although the codex is labelled with the above name only, yet it is found to contain another work entitled Rādhakrishṇanāmastottrasatam As the former has been already noticed, we omit the codex, after a few remarks on its substance &c

पुस्तकेऽस्मिन् पूर्व्वलिखित प्रेमामृतरसायनस्तोत्र राधाकृष्णनामाष्टोत्तरशतञ्चेति पुस्तकद्वयं वर्त्तते ।

---

**No. 56. प्रेमभक्तिचन्द्रिका ।** Premabhakticandrikā Substance country made colourless paper, 15 x 3½ inches Folia, 8 Lines, 7 in a page Character, Bengali Date, ? Appearance old Verse Not correct Complete

A little Bengali poem on the love and faith upon Kṛisna, entitled *Premabhakticandrikā*, by Narottama Dāsa.

पुस्तकेऽस्मिन् नरोत्तमदासविरचितप्रेमभक्तिचन्द्रिकाख्यवङ्गभाषालिखित पद्यनिबन्धविशेषो वर्त्तते ।

तदिदानीमेतस्य भक्तजनस्य मुकुन्दविश्लेषोद्दीपनेन बहिर्भवत. प्राया
कामपि तस्यैव केलिसुधाकल्लोलिनीमुल्लासयता परिरक्षणीया भवता । मत्
कृपयैवेत सामर्थ्यं समर्पयिष्यतीति ॥

**End.** कृष्ण ।

> प्रणीयां परमभयाद्बभूव राधा
> निर्व्याधा जनि भवती गताभिमुख्ये ।
> निःशङ्कं प्रमदमितास्तदाप्यसख्य
> कर्तव्यं भगवति किं प्रियं तवास्ति ॥

पौर्ण । आनन्दास्म गोकुलवत्सो गाढमवश्यमस्मादृशि कृता तथापि किञ्चि
दभ्यर्थये

> प्रथयन् गुणवृन्दमाधुरीमखिलवृन्दावनकुञ्जकन्दरम् ।
> सह राधिकया भवान् सदा प्रभमभ्यस्यतु केलिविभ्रमम् ।

किञ्च

> अलं कन्दलितादरं श्रुतिपुटीमुद्घाटयन् सेवते
> यस्ते गोकुलकेलिनिर्मलसुधासिन्धूत्थबिन्दूनपि ।
> राधामाधविका मधोर्मधुरिमा स्वाराज्यमत्यार्जयन्
> साभीष्टान् भवतीह पादकमल प्रेमोर्मिरुन्मीलतु ॥

कृष्ण । (स्मित्वा) भगवति तथास्तु । तदिह गोदोहावसरे मामपेक्ष्य
चिन्तयिष्यन्तौ पितरावविलम्ब्य गोकुलं प्रविश्य नन्दयामीति निष्क्रान्तः ।

निष्क्रान्ताः सर्वे ।

**Colophon.** इति गौरीतीर्थविहारो नाम सप्तमोऽङ्कः ॥ * ॥

> राधाविलासवीताङ्ग चन्द्र पङ्किलाधर
> विदग्धमाधव साधु शीलयन्तु विचक्षणाः ।
> नन्दसिन्धुरबाणेन्दु संख्ये संवत्सरे गते ।
> विदग्धमाधवं नाम नाटकं गोकुले कृतम् ॥

समाप्तमिदं विदग्धमाधवनाटकम् ॥ * ॥ अथ श्लोकसंख्या २२७० ॥ नमो
भगवते वासुदेवाय ॥ लिपिरियं लिखिता श्रीरामप्रसादशर्म्मणा ॥

विवरणम्—श्रीरूपगोस्वामिविरचितं कृष्णलीलाविषयकं विदग्धमाधवं नाम नाटकम् ।

---

No. 58 विदग्धमाधवनाटकम् । Vidagdhamādhavanāṭakam
Substance, country made white paper, 16 × 4 inches Folia, 147 Lines,

1-10 in a page Character, Bengali Date, ? Appearance, old Verse Not correct Complete

A Bengali versification of the above noticed work, by Yadu*nandana* Dasa

पुस्तकेऽस्मिन् श्रीयदुनन्दनदासकृतो विदग्धमाधवस्य पद्यानुवादो वर्त्तते ।

---

**No. 59.** विलापकुसुमाञ्जलि । Vilapakusumanjalih Substance, country made white paper, $12 \times 4$ inches Folia, 10 Lines, 7-8 in a page. Character, Bengali Date, ? Appearance, not fresh Verse Generally correct Complete

A book of mourning songs in Sanskrit, relating to the separation of Rādhā and Krisna, by Yadunandana Dasa, entitled *Vilapa-kusumañjali*

**Beginning.** श्रीश्रीराधाकृष्ण ।

प्रभुरपि यदुनन्दनो य एष प्रिययदुनन्दन उन्नतप्रभावः ।
स्वयमतुलकृपामृताभिषेकं मम कृतवांस्तमहं गुरुं प्रपद्ये ॥ १ ॥
यो मां दुस्तरगेहनिर्जलमहाकूपादपारक्लमात्
सद्यः सान्द्रदयाम्बुधिः प्रकृतितः स्वैरी कृपारज्जुभिः ।
उद्धृत्यात्मसरोजनिन्दिचरणप्रान्तं प्रपद्य स्वयं
श्रीदामोदरसाच्चकार तमहं चैतन्यचन्द्रं भजे ॥ २ ॥
वैराग्ययुग्भक्तिरसं प्रयत्नै-
रपाययन्मामनभीप्सुमन्धम् ।
कृपाम्बुधिर्यः परदुःखदुःखी
सनातनं तं प्रभुमाश्रयामि ॥ ३ ॥
अत्युत्कटेन नितरां विरहानलेन
दन्दह्यमानहृदया किल कापि दासी ।
हा स्वामिनि क्षणमिह प्रणयेन गाढ-
माक्रन्दनेन विधुरा विलपामि पद्यैः ॥ ४ ॥
देवि दुःखकुलसागरोदरे
दूयमानमतिदुर्गतं जनम् ।
त्वं कृपाप्रबलनौकयाद्भुतं
प्रापय स्वपदपङ्कजालयम् ॥ ५ ॥

id.

अत्योर्ध्वविक्रमगणस्य महाचलस्य
सौन्दर्यविन्दुनपि नार्हति नम्रमीदे ।
मा त्वं विधास्यसि न चेन्मम नेतदानं
किं जीवितेन मम दुःखदवान्वितेन ॥ ९८ ॥
आशाभरैरमृतसिन्धुमयैः कथञ्चित्
कालो मयातिगमितः किल साम्प्रतं हि ।
त्वञ्चेत् कृपां मयि विधास्यसि नैव किं मे
प्राणैर्व्रजेन च वरोरु बकारिणापि ॥ ९९ ॥
त्वञ्चेत् कृपामयि कृपामयि दुःखितायां
नैवातनोस्त्वयि तदा किमिह प्रलापैः ।
त्वत्कुण्डमध्यमपि सद्य इहाक्रमेव
वृन्दावनं मम किं न करिष्यसीह । १०० ॥
यदि प्रणयशालिनि प्रणयपुष्पदामाश्रय
प्रकाममनिरीक्षणैः प्रगुरहस्यदृष्ट्याथवा ।
विलापकुसुमाञ्जलिं हृदि निधाय पादाम्बुजे
मया तव समर्पितस्तव तनोतु तुष्टिं सदा । १०१ ॥

**Colophon.** इति श्रीविलापकुसुमाञ्जलिः ॥ ० ॥ ० ॥ श्रीश्रीराधावल्लभो जयतितरां ॥ ० ॥

विवरणम्—पुस्तकेऽस्मिन् विलापकुसुमाञ्जलिनाम कश्चिद्विलापविषयको वैष्णवनिबन्धो वर्त्तते ॥

---

**No. 60** वैष्णववन्दना । Vaiṣṇavavandana Substance country made white paper 12×14 inches Folia 6 Lines 7 in a page Character, Bengali Date ? Appearance old Verse *Not correct* Complete

A little Bengali poem on the merit of the worship of the Vaiṣṇavas, followed by an account of some of the celebrated Vaiṣṇavas Anonymous

पुस्तकेऽस्मिन् बङ्गभाषारचितपद्यैर्वैष्णवानां वन्दनाफलं यथाक्रमेण कति विख्यातवैष्णवानां नामानि चोल्लिखितानि ।

---

**No 61.** वैष्णवतोषणी । Vaiṣṇavatoṣaṇī Substance, country.

made yellow paper, 16 × 7 inches. Folia 284. Lines, 12-19 in a page. Character, Bengali. Date ? Appearance, not old, with different hand writings. *Prose. Generally correct. Not complete.*

A commentary on the Daśamaskandha or the tenth chapter of the Śrīmadbhāgavata, entitled Vaiṣṇavatoṣaṇī, by Sanātana Gosvāmin. The author says in the introduction that he has explained those portions only which either have not been explained, or which have not been elucidated by Śrīdhara Svāmī. This is the best authority among the Vaiṣṇavas and highly honoured by them.

**Beginning.**

श्रीमन्नन्दयशोदाभ्यै वन्दारुस्थपुरन्दरम् ।
श्रीगोविन्द प्रपद्येह दीनानुग्रहकारकम् ॥
वन्दे श्रीकृष्णचैतन्य भगवन्त कृपार्णवम् ।
प्रेमभक्तिवितानार्थं गौडेष्ववततार य ॥
श्रीमाधवपुरीं वन्दे यतीन्द्र शिष्यसंयुतम् ।
लोकेष्वङ्करितो येन कृष्णभक्तिद्रुमाङ्घ्रिप ॥
श्रीभागवतसिद्धार्थो टीकाद्विविदस्यापि यै ।
श्रीधरस्वामिपादांस्तान् वन्दे भक्तैकरक्षकान् ॥
भट्टाचार्यं सार्वभौमं विद्यावाचस्पतीन् गुरून् ।
वन्दे विभूषणञ्चैव गौडदेशविभूषणम् ॥
वन्दे श्रीपरमानन्द भट्टाचार्यं रसप्रियम् ।
रामभद्र तथा वाणीविलास श्रीपदेशकम् ॥
नमामि श्रीमदद्वैताचार्यं श्रीदामवल्लभम् ।
नित्यानन्दावधूतश्च श्रीमच्चैतन्यवल्लभम् ।
दामोदरस्वरूपादीन् वन्दे चैतन्यपार्षदान् ।
येषां पादरजस्स्पर्शान् दयालोऽप्युत्तमो भवेत् ॥
श्रीवासुदेवदत्तं तं श्रीगोविन्दमुकुन्दकम् ।
मुरारिगुप्तमन्यांश्च वन्द चैतन्यसेवकान् ॥
वृन्दावनप्रियान् वन्दे श्रीगोविन्दपदाश्रितान् ।
श्रीमत्काशीश्वरं लोकनाथं श्रीकृष्णदासकम् ॥
स्वामिपादैर्न यद् व्यक्तं यद्व्यक्तास्फुटं क्वचित् ।
टिप्पणीयमसौ तत्र सेयं वैष्णवतोषणी ॥
वैष्णवानां यदीयं स्यात्तदेव तु तत्फलं ।
तच्छ्रीवैष्णवसिद्धान्तदासत्वेनैव किञ्चन ॥

श्रीमद्भागवतस्तुत्यभक्तोत्तमपुरुषार्थदिनाम् ।
नामिदवाद इत्येव नामेति ख्यातामिमम् ॥
पूर्वे पूर्वंच च व्याख्या पूर्वपक्षतया मता ।
सर्वान्तिमा तु विज्ञेया स्वसिद्धान्ततया मता ॥
येषां श्रीमत्प्रसादेनापि प्रभोऽस्यत्नमाद्गमी ।
ते दीनानुग्रहव्यग्रा शरणं मम वैष्णवाः ॥
राधाप्रियप्रेमविशेषपुष्टो
गोपालभट्टो रघुनाथदास ।
स्यामानुभौ यत्र मुकुन्दसखायौ
को नाम सोऽर्थो न भवेत् सुसिद्ध ॥
श्रीमच्चैतन्यदेवस्य प्रीत्यै भगवतोऽखिलम् ।
ग्रन्थान्तं यदाप्तज्ञानेनैव विलिख्यते ॥
स्वयं विलिखिते किंचिन किंचिद्योग्यैर्विवेचितम् ।
लिखिते यन्नितं तत्रात्र शोध्यं वैष्णवपण्डितैः ॥
श्रीचैतन्यकृपाल्पकणीकृष्णप्रेमलिपप्सुभि
सम्यक् पर्यालोचितं शक्त्या सैषं वैष्णवतोषणी ॥
श्रीमद्भागवतं यदि स्वाद् स्वान्ते पदे पदे ।
तस्य प्रतिपदव्याख्या कार्या तत्प्रतिपत्तये ॥
आद्य पाठीऽत्र लोकोयो द्वितीयोऽपि च कामित ।
नानादृष्टिप्रयुक्तो टीकाकाराद्यनुवादन ॥
पुरा महापुराणस्य दशमीकानि यानि वै ।
लक्षणान्यपि स्कन्दे नामि सन्ति तदीरिता ।
तत्र प्राधान्यत स्कन्दे दशमेऽत्र निरूप्यते
आश्रयो भगवान् कृष्ण स्वपूर्णत्वप्रकाशक ॥
अत्र यद्यपि सामान्याकारेणाश्रयलक्षणं
तथापि कृष्ण एव स्यात् तस्य पर्यवसायिता ।
प्रकाशो हि प्रतिज्ञा त्वमिति तद्गो सतां मता ।
आत्मारामाश्च मुनय इत्यादि सम्मिता च सा ॥
परिभाषा च तत्र स्यादेते चांशेति सूक्तौ ।
तदेतद्वित भावि सद्भावसमुच्चयम् ॥

**End.** नास्ति ।

**Colophon.** इति श्रीदशमटिप्पणी समाप्तेतितम ॥ ० । ८७ । ० ॥

saṭīkah Substance country made white Kāśmīri paper 15 x 5 inches Folia, 122 Lines 6-16 in a page Character Bengali Date 1701 Śaka. Appearance not fresh Prose and verse. Generally correct Complete

Another copy of the same work

विवरणमुक्तपूर्व्वम् ।

---

No 66 भक्तिरसामृतसिन्धुः । Bhaktirasāmṛtasindhuḥ Substance country made white paper 15 x 5 inches Folia 105 Lines 3-10 *in a page Character Bengali Date ? Appearance old* Verse Not correct Complete

*This codex contains only the text of the abovementioned work*

पुस्तकेऽस्मिन् भक्तिरसामृतसिन्धोर्मूलमात्र वर्त्तते ।

---

No 67 भक्तिरसामृतसिन्धुटीका । Bhaktirasāmṛtasindhuṭīkā. Substance country made white and yellow paper 15 x 6 inches Folia, 51 Lines 11 17 in a page Character Bengali Date 1534 (1) Śaka Appearance nearly fresh Prose *Generally correct Complete*

This codex contains only the commentary as noticed above of the Bhaktirasamṛtasindhu

पुस्तकेऽस्मिन् भक्तिरसामृतसिन्धोर्दुर्गमसङ्गमनीनामटीकामात्र वर्त्तते ।

---

*No 68* भक्तिरसामृतसिन्धुटीका । *Bhaktirasāmṛtasindhuṭīkā* Substance country made white paper 15 x 5 inches Folia 81 Lines

---

*(1) This is the date of composition of the commentary*

1-11 in a page Character, Bengali Date, 1682 Appearance, o Prose Generally correct Complete

The same work

विस्तरयन्तुमपूर्व्वम् ।

---

No 69. भक्तिसामान्यलहरी । Bhaktisāmānyalahari Substance, country made white paper, 15 x 5 inches Folia, 55 Lines, 6-12 in a page Character Bengali Date ? Appearance nearly old Prose Generally correct Incomplete

Another commentary on the Bhaktirasāmṛitasindhu, entitled Bhaktisāmānyalahari Anonymous

**Beginning.** श्रीराधाकृष्णाभ्यां नमः ।

सर्व्वाल्पं सुमधुररसं स्वादयन् योऽवतीर्णो
धन्ये गौडे व्रजपतिसुतः कृष्णचैतन्यनामा ।
आचाण्डालात् सकलजगति प्रेमभक्तिं प्रदाता
कारुण्याब्धिर्विशतु हृदि मे श्रीशचीनन्दनो मे ॥
श्रीराधिका माधविका वसन्त
व्रजाधिपप्राणनिधानबन्धुम् ।
रसज्ञभक्तौघचकोरचन्द्र
ममाश्रयं नन्दतनूजमीशम् ॥
दुर्गमं सुगमं तत्त्वं भवेद्यस्य प्रसादतः
राधाकृष्णरसे सद्यः श्रीरूपं नमामि तम् ॥
रागानुगाभिभक्तौघसमाश्रयात्
श्रीराधया सह सदा चरतां व्रजेन्दुम् ।
श्रीरूपपादकमलार्पितचेतसां मे
चित्ते सदा समरसद्भजतां पदाब्जे ॥

अथ श्रीमान् ग्रन्थकारः सर्व्वभागवतश्रीकल्पिताभिलाषपरवशतया श्रीचैतन्यदेवस्य कृपया प्रकाशितश्रीकृष्णप्रेमभक्त्यात्मकतयाऽत्यद्भुततमं श्रीभक्तिरससिन्धुनामानं ग्रन्थं कुर्व्वन् प्रथमं तावत् स्वाभीप्सितपरिपूर्त्त्यै स्वेष्टदेवस्तोत्ररूपं मङ्गलमाचरति तत्रैव ग्रन्थार्थं संक्षेपतो दर्शयति । अखिलेति ।

End नास्ति ।

Colophon. इति [illegible] १०१० १२

विवरणम्—[illegible] टीकासमेतम् [illegible] वर्त्तते ।

---

No 70. भगवद्गीता सटीका । Bhagavadgītā saṭīkā Substance, country made yellow paper, 15 x 4 inches Folia, 15 Lines, 14 15 in a page *Character, Bengali Date,* ? *Appearance, not fresh Verse* and prose Generally correct. Incomplete

This codex contains the text of the famous Bhagavadgita with the well-known commentary Subodhani in margins both incomplete.

पुस्तकेऽस्मिन् सुबोधिनीटीका सहिता भगवद्गीताऽसम्पूर्णा वर्त्तते ।

---

No. 71. भगवद्गीता सटीका । Bhagavadgīta saṭīkā *Substance,* country made white paper, 22 x 9 inches Folia 6 Lines, 4-17 in a page Character, Bengali. Date, ? Appearance, old Prose and verse *Generally correct* Incomplete

Another incomplete copy of the above-mentioned work

विवरणमसम्पूर्णम् ।

---

No 72 भजनशतलीला । Bhajanaśatalīlā Substance, country made white paper, 15 x 5 inches Folia 7 Lines, 4-13 in a page *Character, Bengali Date,* ? Appearance, old Verse Not correct Complete.

A little Bengali work consisting of one hundred and twelve Bhajanas or worship of Kriṣṇa entitled Bhajanāvatāli, by Śri-dhruva Dāsa

पुस्तकेऽस्मिन् श्रीध्रुवदासविरचितानि वङ्गभाषानिबद्धानि द्वादशाधिकशतसंख्यकानि श्रीकृष्ण विषयकाणि भजनानि सन्ति ।

---

**No. 73. भागवत सटीकम् ।** Bhāgavatam saṭīkam Substance, country made ash coloured paper, 21 × 7 inches Folia, 68 Lines, 11–19 in a page Character, Bengali Date, ? Appearance, not fresh Prose and verse Not correct Incomplete

This codex contains the text of Bhāgavata with two commentaries Kramasandarbha and Bhāvārthadīpikā both incomplete, reaching upto a portion of the 16th chapter of the Prathamaskandha only In addition there are some 20 folia containing fragments of different skandhas without any order

पुस्तकेऽस्मिन् ६८ पत्रपर्य्यन्तं क्रमसन्दर्भभावार्थदीपिकासहित श्रीमद्भागवतप्रथमस्कन्धस्यारम्भा दपि षोडशाध्यायारम्भात्मको नियमो वर्त्तते, तत परं विंशति पत्राणि विभिन्नस्कन्धीयानि विशृङ्खलानि च सन्ति ।

---

**No 74. श्रीमद्भागवत सटीकम् ।** Śrīmadbhāgavatam saṭīkam Substance, country made yellow paper, 15 × 4 inches Folia, 64 Lines, 13–15 in a page Character, Bengali Date, ? Appearance, old, worn out Prose and verse Generally correct. Complete

This codex contains the text of the fifth and sixth skandhas of the Śrimadbhāgavata with Śridharasvāmin's commentary on the margins, each of the skandhas having separate marks the fifth 47 and the sixth 17, total 64

पुस्तकेऽस्मिन् श्रीधरस्वामिकृतटीकासहितौ श्रीमद्भागवतपञ्चमषष्ठस्कन्धौ सम्पूर्णौ वर्त्तेते ।

Only the text of the fifth skandha

पुस्तकेऽस्मिन् पञ्चमस्कन्धस्य मूलमात्रं वर्तते ।

---

**No. 81.** भागवतषष्ठस्कन्धः । *Bhāgavataṣaṣṭhaskandhaḥ* Substance, *country made white paper*, 12 x 3 inches Folia, 19 Lines 10 in a page Character, Bengali Date, ! Appearance very old, worn out, torn and writing injured in parts Verse Generally correct. Incomplete

*The text of the sixth skandha incomplete*

पुस्तकेऽस्मिन् श्रीमद्भागवतस्य षष्ठस्कन्धोऽसम्पूर्णो वर्तते ।

---

**No 82** भागवताष्टमस्कन्धः । Bhāgavatāṣṭamaskandhaḥ Substance, country made white paper 12 x 3 inches Folia, 40 Lines 6–9 in a page Character, Bengali Date Śaka 1578 Appearance, *very old, worn out, torn and writing effaced in parts* Verse Generally correct Complete

The text of the eighth skandha

पुस्तकेऽस्मिन् श्रीमद्भागवतस्याष्टमस्कन्धः सम्पूर्णो वर्तते ।

---

**No 83** भागवतपञ्चमस्कन्धटीका । Bhāgavatapañcamaskandha ṭīkā Substance, country made white paper, 11 x 4 inches Folia, 34 Lines, 12–13 in a page Character Nagara Date ; Appearance, *very old Prose Generally correct Complete* (as regards the Pañcama skandhaṭīkā only)

This codex contains Śrīdhara Svāmin's commentary on the Pañcamaskandha only

पुस्तकेऽस्मिन् भागवतीयपञ्चमस्कन्धस्य श्रीधरस्वामिकृतटीकामात्रं वर्तते ।

**No. 84. भागवतैकादशस्कन्धटीका ।** *Bhāgavataikādaśaskandha ṭīkā* Substance, country made white paper, 12 × 5 inches Folia, 75 Lines, 13 in a page Character, Nāgara Date, ? Appearance, very old, worn out, partly torn and writing effaced in most parts Prose Generally correct Incomplete

Śrīdhara Svāmin's commentary on the sixth skandha of the Bhāgavata incomplete.

पुस्तकेऽस्मिन् श्रीधरस्वामिकृता श्रीमद्भागवतषष्ठस्कन्धटीकाऽसम्पूर्णा वर्त्तते ।

---

**No. 85. भागवतैकादशस्कन्धः सटीक ।** *Bhāgavataikādaśaskandhaḥ saṭīkaḥ* Substance, country made white paper, 12 × 6 inches Folia, 101 Lines, 10-15 in a page Character, Nagara Date, ? Appearance, very old, worn out, thoroughly worm eaten and torn in parts Prose and verse Generally correct Incomplete

This codex contains the text of the Ekadaśa skandha of the Śrīmadbhāgavata with Śrīdhara Svāmin's commentary in margin both incomplete

पुस्तकेऽस्मिन् श्रीधरस्वामिकृतटीकासहित श्रीमद्भागवतीयदशमस्कन्धोऽसम्पूर्णो वर्त्तते ।

---

**No. 86. भागवतदशमस्कन्धटीका वैष्णवतोषणी ।** *Bhāgavata-daśamaskandhaṭīkā Vaiṣṇavatoṣaṇī* Substance, country made white paper, 14 × 7 inches Folia, 383 Lines, 15-22 in a page Character, Bengali Date, 1576 * Appearance, not fresh Prose Not correct Complete, (as regards the Daśamaskandha's ṭīkā)

---

* The date in which the ṭīkā was composed is given in a verse at the end of the Colophon, such as—

शाके षट्सप्ततितम पूर्णेन्दु टिप्पणी शुभा । सचिरा सुगमव्याख्या पक्षेणाभिलिखे तथा ।'

This codex contains the commentary Vaisnavato ani, by Sanātana Gosvāmin on the Da amaskandha only At the end of this skandha there are the following verses by Jiva Gosvamin giving an account of the commentator his genealogy and works he wrote

पुस्तकेऽस्मिन् श्रीमद्भागवतदशमस्कन्धस्य श्रीसनातनगोस्वामिकृतवैष्णवतोषण्यभिधा टीका वर्त्तते। स्कन्धस्य शेषे श्रीजीवगोस्वामिकृता टीकाकर्तृसम्प्रदायका कति श्लोकाश्च वर्त्तन्ते, तान् वयं यथायथमत्र समुद्दाहराम ।

य श्रीभागवतं प्राण स्वप्ने पाठुश्च जागरे ।
स्वप्नदृष्टान् देवविप्रान् प्रथमे वयसि स्थितः ॥
ममस्तु श्रीभागवतप्रेमामृतमहाम्बुधौ ।
तथामेवाहि सेवोऽथ श्रीसनातननामिनाम् ॥
तद्वैतद्विनिवेद्यापि किञ्चिदस्यविवक्षया ।
कथ्यो तदंघ्रिजीवेन जीवेनेदं निवेद्यते ॥
उदयादयदक्रमाश्रितवतौ यस्यामृतस्याश्विनौ
जिह्वा कल्पलता ययो मधुकरौ भुयो भरीधृष्यति ।
देवि राजसभाप्रभाजितपदः कर्णाटभूमिपतिः
श्रीसर्वज्ञजगद्गुरुर्भुवि भरद्वाजान्वयग्रामणी ॥ १ ॥
पुत्रस्तस्य नृपस्य कश्यपनुमारीश्वरो रौहिणी-
कान्तस्त्रिग्रघोमद मुरपतेस्तुल्यप्रभावोऽभवत् ।
तस्यासावनिपूजितोऽखिलयजुर्वेदैकविद्यानिभु
र्लक्ष्मीवाननिरुद्धदेव इति य ख्याति क्षितौ लब्धवान् ॥ २ ॥
महिष्यौ भूपस्य प्रथितयशसस्तस्य तनयौ
प्रजाप्त रूपेश्वरहरिहराख्यौ गुणनिधी ।
तयोराद्य शास्त्रे प्रबलतरभावं बहुविधे
जगामान्य शस्त्रे निजनिजगुणस्पर्द्धितया ॥ ३ ॥
विभक्त स्व राज्यं मधुरिपुपुरावस्थितिरिह
पिता ताभ्यां रूपेश्वरहरिहराख्यौ क्षितिपती ।
निरस्तोऽयं रूपेश्वरमथ जनिरौ पहिरद
महाज्याहाज्योत्स्ना कृष्णनिवसभतदन्तौ ॥ ४ ॥
श्रीरूपेश्वरादिह पदमवस्थितिमधुराज्य श्रम-
दक्षिणमुद्रो श्रमं वन्दितश्च पौरस्त्येषु वशी ।

तत्रासौ शिखरेश्वरस्य विषये सत्तु मुख्यं संवसन्
यस्य पुत्रमजीजनद्गुणनिधि श्रीपद्मनाभाभिधम् ॥ ५ ॥
यजुर्वेदी शाखी वितितिरपि सर्व्वोपनिषदां
रसज्ञायां तस्य स्फुटमघटयत्ताण्डवकलाम् ।
जगन्नाथप्रेमोल्लसितहृदय कर्णपदवीं
न यात कैर्वा वा स किल नृपरूपेश्वरसुत ॥ ६ ॥
विराज गुणिशेखर शिखरभूमिवासस्पृहा
स्फुरत्सुरतरङ्गिणीतटनिवासपर्य्युत्सुक ।
ततो दनुजमर्द्दनक्षितिपपूज्यपाद क्रमा
दुवास नवहट्टके स किल पद्मनाभ कृती ॥ ७ ॥
भूमि श्रीपुरुषोत्तमस्य यजनस्यैव सर्वोत्तमे
कन्याष्टादशकेन सार्द्धमभवन्त तस्य पञ्चात्मजा ।
तत्राद्य पुरुषोत्तम खलु जगन्नाथश्च नारायणो
धीर श्रीमुरारिरतमगुण श्रीमान् मुकुन्द कृती ॥ ८ ॥
आसीत्तत्र मुकुन्दतो द्विजवर श्रीमान् कुमाराभिध
कश्चिद्द्रोहमवाप्य सत्कुलजनर्व्वङ्गाभ्यर्ण्य तत्र ।
तत्पुत्रेषु महिष्ठवैष्णवगणप्रष्ठास्त्रयो जज्ञिरे
य स्वं गौडमहेन्द्र चेह च पुनस्तुमलरामर्च्चितम् ॥ ९ ॥
आदि श्रीलसनातनस्तदनुज श्रीरूपनामा तत
श्रीमद्वल्लभनामधेयललितो निर्विद्य ये राज्यत ।
आसाद्यातिकृपां ततो भगवत श्रीकृष्णचैतन्यत
सामान्य खलु भेजिरे सुरहरप्रेमाप्यभक्तिश्रियं ॥ १० ॥
य सप्ताग्रज पिता मम स तु श्रीराममासेदिवान्
गङ्गायां द्रुतमग्रजौ पुनरमू वृन्दावने सङ्गतौ ॥
याभ्यां माथुरमण्डलोपनिषदो व्यक्तीकृतो भक्तिर
प्युर्व्वी श्रीव्रजराजनन्दनरता सर्व्वत्र संवर्द्धिता ॥ ११ ॥
यश्चित्र रघुनाथदास इति विख्यात क्षितौ राधिका
कृष्णप्रेममहार्णवोर्म्मिनिवह घूर्णन् सदा दीव्यति ।
दृष्टाश्मप्रकरप्रभाभरसतीर्थवालयोर्भ्राजतो
यैस्तुल्यत्वपदमर्तर्म्भिभूत्वनै साधयन्नार्य्यौ तमे ॥ १२ ॥
गोपालबालकव्याजाद्ययो साक्षादभूच्च ह ।
साक्षाच्छ्रीयुतगोपाल श्रीपादपद्मलीलया ॥ १३ ॥

**Colophon.** इति षष्ठः सन्दर्भः ॥ इति कलियुगपावनस्वभजनविभजनप्रयोजनावतारश्रीश्रीभगवत्कृष्णचैतन्यदेवचरणानुचरविश्ववैष्णवराजसभासभाजनभाजनश्रीरूपसनातनानुशासनभारतीगर्भे श्रीभागवतसन्दर्भे प्रीतिसन्दर्भो नाम षष्ठः सन्दर्भः ॥०॥

विवरणम्—श्रीभागवतसन्दर्भान्तर्गतषष्ठसन्दर्भसारम्।

---

*N B* Under this number we find an incomplete copy of the Sārasangraha an abstract of the above mentioned work, probably by the same author, with the following description

Substance, country made yellowish paper, 14 x 5 inches Folia, 16 Lines, 10–12 in a page Character, Bengali Date, ? Appearance, old Prose Generally correct Incomplete

**Beginning.** ओं नमो भगवते। श्रीकृष्णाय नमः ॥

श्रीभागवतसन्दर्भं प्रवेष्टुं योऽभिवाञ्छति।
तत्कृते क्रियते सारसंग्रहः साम्प्रतं मया ॥
यस्य ब्रह्मेति संज्ञां क्वचिदपि निगमे याति चिन्मात्रसत्ता
प्यंशो यस्यांशकैः स्वैर्विभवति वशयन्नेव मायां पुमांश्च।
एकं यस्यैव रूपं विलसति परमव्योम्नि नारायणाख्यं
स श्रीकृष्णस्वरूपस्तु इह भगवान् प्रेमदत्वाङ्घ्रिभाजाम् ॥

अथैवं सूचितानां श्रीकृष्णतद्वाच्यवाचकतालक्षणसम्बन्धतद्भजनलक्षणविधेयसपर्यायाभिधेयतत्प्रेमलक्षणप्रयोजनाख्यानामर्थानां निर्णयाय तावत्प्रमाणं निर्णीयते। तत्र पुरुषस्य भ्रमादिदोषचतुष्टयदुष्टत्वात् सुतरामचिन्त्यालौकिकवस्तुस्पर्शायोग्यत्वाच्च तत्प्रत्यक्षादीन्यपि सदोषाणि। ततस्तानि न प्रमाणानि इत्यनादिसिद्धसर्वपुरुषपरम्परासु सर्वलौकिकालौकिकज्ञाननिदानत्वात् अप्राकृतवचनलक्षणो वेद एवास्माकं सर्वातीतसर्वाश्रयसर्वाचिन्त्याश्चर्यस्वभावं वस्तु विविदिषतां प्रमाणम्। तच्च वेदशास्त्रं सम्प्रति दुष्पारत्वाद् दुरधिगमार्थत्वाच्च तदर्थनिर्णायकानां मुनीनामपि परस्परविरोधात् वेदरूपो वेदार्थनिर्णायकश्चेतिहासपुराणात्मकः शब्द एव विचारणीयः।

**End.** नास्ति।

**Colophon.** नास्ति।

विवरणम्—भागवतसन्दर्भसारार्थबोधक सारसंग्रहाभिध कश्चित्प्रबन्धविशेषोऽसम्पूर्णो ऽयं।

**No. 88.** श्रीराधाकृष्णस्तोत्राणि (भागवतपारायणव्यवस्था)। Śrī Rādhākṛṣṇastotrāni Bhāgavatpārayanavyavasthā (1) Substance, Kāśmīrī white paper, 10 × 5 inches Folia, 13 Lines, 7–12 in a page Character, Bengali Date, ? Appearance, nearly fresh. Verse. Generally correct Complete

The codex, though labelled Bhagavata Parāyaṇa Vyavasthā, contains only some Sanskrit poems in praise of Kṛṣṇa and Rādhā, such as, (1) Ānandacandrikastotra (2) Premasudhāpatra, (3 Śrīrādhikāṣṭaka, (4) Prārthanāpaddhati, (5) Cāṭupuṣpāñjali, (6) Gāndharvasamprārthanāṣṭaka, (7) Brajanabīnanandaṣṭaka (8) Karpanyapañjikāstotra, and (9) Utkalikaballarī Most of these poems have been already described in a preceeding number while the rest are too small to be described We have changed the label and named it Śrīradhākṛṣṇastotrāni

उपरि भागवतपारायणव्यवस्थेति न मा समङ्कितमपि पुस्तकमिदमुपादित सदन्ययैव प्रतिपन्नम्। अत्र खलु श्रीराधाकृष्णविषयकाणि कति चुद्रस्तोत्र मयानि पद्यानि सन्ति। अत कारणादस्माभिरिदानीं श्रीराधाकृष्ण स्तोत्राणीति प्रकृतं नाम लिखितम्।

---

**No 89.** श्रीभगवद्भक्तिविलास सटीक। Śrībhagavadbhaktivilāsaḥ Saṭīkaḥ Substance, country made white paper, 15 × 7 inches Folia, 322 Lines, 3–23 in a page Character Bengali Date, ? Appearance, nearly old Prose and verse Not correct Incomplete

The work, though named Bhagavadbhaktivilāsa in all the colophons yet after careful perusal, turns out to be the same with the famous Haribhaktibilāsa, the voluminous work guiding the Vaiṣṇavas in the performance of their rites ceremonies &c , by Gopāla Bhaṭṭa The codex contains the text along with the commentary Digdarśinī, written in the margins from the beginning of the second Vilāsa or chapter upto the end of the eighteenth The first and last chapters are wanting

ऊर्ध्वहैमाथवा कुर्य्यात् सविस्तारं त्रिकोणितम् ।
यद्योऽन्तरे वा विन्यस्य तस्यार्द्धेन तु विस्तृतम् ॥
तच्चतुर्भागहीनं वा सूपपीठ प्रमाणत ॥
विभागेनाथ पीठस्य प्रमाण सम्मतो भवेत् ।
तन्मानेन ततो दैर्घ्यं समाश्रा नायत पुन ।
शेषमानेन विस्तीर्णं तस्यापीठं मसन्तरा ।
लिखयेदथतो मूलात् तत्कर्ण्यानुमकराननम् ॥ * ॥ * ।

Colophon. इति श्रीगोपालभट्टविलिखिते श्रीभगवद्भक्तिविलासे श्रीमूर्त्तिप्रादुर्भावो नामाष्टदशो विलास ॥ १८ ॥ + ॥ + ॥ + ॥ + ॥

End *of the Commentary of the 18th chapter* प्रतिमालक्षणयुक्ता सविता इष्टदा भवतीति ॥ १८ ॥

Colophon *of the Commentary* इति श्रीहरिभक्तिविलासटीकायामष्टादश ॥ १८ ॥ + ॥

विवरणम्—पुस्तकेऽस्मिन् श्रीगोपालभट्टकृतहरिभक्तिविलासाभिध सुप्रसिद्धो निबन्धो भगवद्भक्तिविलासनामान्तरितोऽसम्पूर्णं सटीकश्च वर्त्तते ।

---

**No. 90.** गीतावली । Gitavali Substance, country made white paper, 10 × 3 inches Folia, 12 Lines, 3–13 in a page Character, Bengali Date, ? Appearance, old and slightly worn out Verse Generally correct Complete

A small work consisting *of Sanskrit songs relating the adventures* of Śrikṛṣṇa in the Brindabana, entitled Gitavali, by Rūpa Goswamin, already noticed

विवरणमुक्तपूर्वम् ।

---

**No 91.** गोवर्द्धनाष्टदशकम् । *Govarddhanāṣṭayadaśakam* Substance, country made white paper, 12 × 5 inches Folia, 1 Lines 8–12 in a page Character, Bengali Date, ? Appearance, not fresh Verse Generally correct Complete

A small poem consisting of ten ślokas on Kṛṣṇa's raising the *Govardhana hill with one finger only of a hand* Anonymous

**No 93. रागमाला ।** Rāgamālā Substance, foolscap paper, 15 x 5 inches Folia, 5 (of which first two are wanting Lines, 4-7 in a page Character, Bengali Date ? Appearance, not fresh Verse Not correct Incomplete (having neither beginning nor end)

A small treatise on the Indian music, entitled Rāgamālā The text being incomplete we could not describe it properly

पुस्तकेऽस्मिन्—रागमालाविषय अविद्यमानविषयको निरूपोऽसम्पूर्णविवर्त्ते ।

---

**No 94 रामगीता ।** Rāmagītā Substance, country made ash coloured paper, 24 x 8 inches Folia, 2 Lines, 11-15 in a page Character, Bengali Date, ? Appearance not old slightly torn in parts Verse Generally correct. Complete

A portion of the Adhyātmya Rāmāyaṇa discussing the supreme god-head of Rāma, after the way of the Bhagavadgītā, under the name of Rāmagītā

**Beginning.** महादेव उवाच ।

ततो जगन्मङ्गलमङ्गलात्मना
विधाय रामायणकीर्त्तिमुत्तमम् ।
चचार पूर्वाचरितं रघूत्तमो
राजर्षिवर्य्यैरपि सेवितं यथा ।
सौमित्रिणा पृष्टमुदारबुद्धिना
राम कथा प्राह पुरातनी शुभा ।
राज्ञ प्रमत्तस्य नृगस्य शापतो
द्विजस्य तिर्य्यक्त्वमथाह राघव ।
कदाचिदेकान्तमुपस्थितं प्रभुं
रामं रमालालितपादपङ्कजम् ।
सौमित्रिरासादितशुद्धभावन
प्रणम्य भक्त्या विनयान्वितोऽब्रवीत् ।
त्वं शुद्धबोधोऽसि हि सर्व्वदेहिना
मात्मास्यधीशोऽसि निराकृति स्वयम् ।

काव्यं कवेः काव्यतया प्रसिद्धं
काव्यस्य काव्यञ्च यतोऽस्ति काव्यम् ।
तदेव काव्यं मम काव्यकाव्यं
अशेषकाव्य परमन्तु काव्यम् ॥ ३ ॥
चैतन्यरूपोदितरीतिसिक्ता
मेकान्तमभ्यस्तुमहं समीहे ।
तत्तदीयानुगतोऽत्र भावो
भावोचितोऽयं रसो न काव्यम् ॥ ४ ॥
वैकुण्ठकोट्यपि च वासरेऽत्र
ब्रह्माण्डकोट्योऽपि चितोऽचितोऽपि ।
सर्वत्र वृन्दावनमेतदेव
यथा स कृष्णः पुलिनासनादौ ॥ ५ ॥
इदं घनीभूतचिदेकरूप
वृन्दावनं यत्र वसन्ति सर्वे ।
श्रीकृष्णलीलापरिवाररूपा
यथैव कृष्ण. स तथैव तेऽपि ॥ ६ ॥
सर्वे घनीभूतचिदेकरूपा
स्तथाप्यहो प्राकृतवत् प्रतीताः ।
परस्पर चेष्टितमप्यमीषा
मशेषलोकेऽपि चमत्कारीति ॥ ७ ॥

End *of the Text*

क्षीरोदधि. शेषविशेषरूपं
स शेषशायी स्वयमस्ति सोऽपि ।
तत्पादसंवाहनभक्तिमग्ना
सखीजनानां कुतुकाय कथा ॥ ९ ॥
सुप्तोऽपि च तादृश काननेषु
वृन्दावनेन्दोरखिलप्रियाणाम् ।
कुञ्जादिनानाकुसुमास्पदानि
तच्चापि नम्रा यदि वास्तवानि ॥ १८ ॥
स्तुतिप्रसिद्धान्युपकाननानि
करेषु बिभ्रतिरसि तत्र ।

तत्कोकिला काननमाम यत्र
सङ्केतित कोकिलनाद आसीत् ॥ ५९ ॥
सर्व्वानन्दप्रमूलमतुलं लीलैव तथा अपि •
रूपं तस्य च धाम तत्र परमं माधुर्य्यमाय परम् ।
श्रीवृन्दावनमेव दैवत इह श्रीरीतिचिन्तामणौ
तस्योद्देशविशेषनिरूपणे सर्गस्तोयोत्तम ॥ ६० ॥

**Colophon** *of the Text* इति श्रीविश्वनाथचक्रवर्त्तिविरचितश्रीरीतिचिन्तामणि समाप्त ॥ * ॥ ॥ * ॥ ॥ * ॥

**End** *of the Commentary* यत्र चौरीदधिरस्ति । शैवस्य विशेषरूपं पञ्चाननमिव तथा स स्वयं श्रीकृष्णश्च यत्रास्ति सापि श्रीराधापि तस्य सेवयापि पादसम्वाहन भक्तो नमा सती यत्रास्ति कीदृशी सखीनां कुतुकार्थं नमा सुकामा ॥ ५७ ॥ वृन्दावनेन्द्रो श्रीकृष्णस्याखिलब्रजजनमण्डलैश्च तथापि मन्दरूपया श्रीमत्या अपि आस्पदानि कुञ्जकुञ्जमन्दिरादिलीलाकौतुकस्थानानि द्वादश मुख्यवनेषु सन्ति । तथा श्रीलक्ष्मीदेव्या हृदि आस्पदानि अपदानि ॥ ५८ ॥ अतो धनिष्ठानि हरिगुणविलासपदानि सन्ति । हार्दिमद्दीनिमग्नस्थानास्पदानीति पाठे ईशो महादेवस्तस्य ईश श्रीकृष्णस्य सुखस्थानानि तत्र तेषूपवनेषु मध्ये कोकिला वननामास्ति यत्र कोकिला वने कृष्णस्य सङ्केतित कोकिल नाद आसीदभूत् । सङ्केतो यथा मयामुकसमये कोकिलवत् शब्दं करिष्यामि तदा त्वया गन्तव्या ॥ ५९ ॥ इह रीतिचिन्तामणौ जगति वा श्रीवृन्दावनमेव तदा तत्र श्रीराधायास्तस्य श्रीकृष्णस्य च लीलैव रूपञ्च धाम च दैवतं । तत्र लीलारूपधामसु परमं यन्माधुर्य्यमाय तदेव परं सर्वोत्तमं सर्व्वानन्दस्य मूलं एकमतुलं तत्र तन्मानन्ददायिषु लीला रूपधामसु मध्ये श्रीवृन्दावनमेव दैवतं कीदृशं परमं सर्वोत्तमं माधुर्य्य माय परमप्राकृत । इह रीतिचिन्तामणौ तस्य वृन्दावनस्य य उद्देश विशेष चन्नोद्देशविशेषस्य निरूपणे नैमकथने वा वतीय सर्गः ॥ ० ॥

**Colophon** *of the Commentary* नास्ति ।

विवरणम्—पुस्तकेऽस्मिन् श्रीविश्वनाथचक्रवर्त्तिप्रणीतरीतिचिन्तामणिनामक श्रीकृष्णलीला विषयक काव्यग्रन्थः सटीको वर्त्तते ।

---

**No. 97. रूपचिन्तामणि ।** Rupacintīmaṇih The codex contains leaves of the following different descriptions—(1) Substance, county

made yellowish paper, 9 × 4 inches Folia, 2 Lines, 9-15 in a page. Character, Bengali Date, ? Appearance, old Verse Not correct Complete

(2) Substance, country made white paper, 12 × 4 inches. Folia, 6 (of which first two fol are wanting) Lines 9-11 in a page Character, Bengali Date, ? Appearance, old Prose and verse Not correct. Incomplete, but having explanatory notes in margins

Rūpacintāmani or a complete description of Kṛṣṇa and Rādhā from top to toe in verse Anonymous

**Beginning.** श्रीश्रीकृष्णाय नमः ।

चन्द्रार्द्धं कलश त्रिकोणधनुषी खं गोष्पदं प्रोष्ठिकां
शङ्खं सव्यपदेऽथ दक्षिणपदे कोणाष्टकं स्वस्तिकम् ।
चक्रं च्छत्रयवाङ्कुशध्वजपवीजम्बूर्द्ध्वरेखाम्बुजं
बिभ्राणं हरिमूनविंशतिमहालक्ष्मार्च्चिताङ्घ्रिं भजे ॥ १ ॥
क्रमारिध्वजवल्लिपुष्पवलयान् पद्मोर्द्ध्वरेखाङ्कुशा
नर्द्धेन्दुञ्च वामसमनु या शक्तिं गदां स्यन्दनम् ।
वेदीकुण्डलमत्स्यपर्व्वतदर धत्तेऽन्वयम्य पदं
तां राधां चिरमूनविंशतिमहालक्ष्म्यार्च्चिताङ्घ्रिं भजे ॥ २ ॥
कलिन्दात्मजावेदिते मधुच्छन्दा-
वने कुञ्जपुञ्जाप्त मार्गमुखी ।
सखीकुञ्जिमालम्बहायोगपीठे
स्फुरत्तुङ्गकल्पद्रुमूले सुगन्धी ॥ १ ॥

**End.** रखोर्म्मिकाणान् धनबिन्दुवर्णान्
सश्यामबिन्दुं चिबुकं सुग्वासम् ।
चोष्ठाधरौ मल्लयुगं नवीन
कर्णौ लसत्कुण्डलचक्रिकाढ्यौ ॥ १७ ॥
नासामणी मौक्तिकसितहेम
इदं समत्कुक्तलगन्धमध्यौ ।
भ्रुवौ कटाक्षं तिलकप्रदीपं
यास्यां सुरङ्गामचमीलितानम् ॥ १८ ॥
श्रीमत्तरीयां कटिचित्रचूडा
नवीनकूर्पासनितम्बबिम्बाम् ।

श्रेणी निवेशोमित बालवाग्या
विरागदयामथ मन्दहासम् ॥ २८ ॥
श्रीराधिकामाधवदर्पिता
मयी मनोविस्मितयोश्चयुग्मे।
भावसंशिथी भूतिमान् पठन् स
प्राप्नोति तद्दर्शनमाशु साधयात् ॥ ०॥ ० ॥ ० ॥ ०॥

**Colophon.** नास्ति ।

विवरणम्—स्वरूपविलासविलास श्रीराधाकृष्णरूपवर्णनाविषयकोनिबन्धः ।

---

**No. 98. स्वरूपचतुष्टयादिप्रकाशक ।** Svarupacatuṣṭayādiprakāśaka. Substance, country made white paper, 16 x 6 inches. Folia, 12. Lines, 12–18 in a page. Character, Bengali. Date, ? Appearance, old. Prose and verse. Not correct. Incomplete.

Although the label put on the codex marks it under a quite different name but after careful perusal the work appears the same as the Kṛiṣnacaritāmṛita which has been already noticed in No 10. Unanimous.

पुस्तकमिदं सम्यग्विभिन्ननामाङ्कितमपि पूर्वालोचितम श्रीकृष्णचरितामृतम् भिन्नमेनाभिन्नमेव ।

---

**No. 99. स्तवामृतलहरी ।** Stavāmṛitalaharī. Substance, country made white paper, 16 x 6 inches. Folia, 28. Lines, 15-21 in a page. Character, Bengali. Date, 1600 (1). Appearance, old. Prose and verse. Not correct. Complete.

A collection of hymns on defferent subjects under the common name of Stavāmṛ talaharī, each of the hymns having separate name according to its subject and accompanied with commentary in both margins. The codex contains the following hymns or stavas — (1) Srigurudevāṣṭakam, (2) Vrindāṣṭakam, (3) Śacinandana Vijayā-

---

(1) This is the date of composition of one of the contents the Suratakathāmṛitākhyam Āryāśataka.

ṣṭakam, (4) Suratakathāmṛtākhyam Āryāśatakam, (5) Vṛndāvanāṣṭakam (6) Rūpacintāmaṇiḥ (7) Saṁkalpakalpadrumam, (8) Śrī rādhikādhyānāmṛtam, (9) Svapnavilāsāmṛtam, (10) Jagan mohanamiṣṭadevam, (11) Gītāvalī Of these Rūpacintāmaṇi only has been noticed in No 97 Separate descriptions of the rest of the works are given below

(1) गुरुदेवाष्टकम् । Gurudevaṣṭakam, eight stanzas on the greatness of Guru by Viśvanātha Cakravartin

Beginning *of the Commentary* श्रीराधाकृष्णाभ्यां नमः ।

प्रभुः श्रीकृष्णचैतन्यो जीयात् यत्कृपया भवेत् ।
श्वापि सिद्धस्तथं मेरुर्मूर्खोऽपि विद्वान् मतोऽनुमान् ॥

प्रथकर्तादौ श्रीभागवतस्य श्रीभगवद्गीतायाश्च स्वकृतटीकायां भक्तेरेव साधन साध्यसारभूतत्व निर्णीय श्रीमद्वृन्दावनचम्पौ वर्णितं यत् श्रीकृष्णतत्परि करलीलाश्रीवृन्दावनीयवस्तुतादीनां स्वरूपमाधुर्यादिकं तत् सम्यक् विवृतम्यमपि स्वकृतटीकायां प्रकाश्य श्रीरूपगोस्वामिकृत उज्ज्वलनीलमणि विदग्धमाधवदानकेलिकौमुद्यपरिस्वकृतटीकायां ग्रन्थकर्तुराशयं पूर्वापर सङ्गत्या सम्यक् प्रकटय्य ब्रह्मसंहितोपरि स्वकृतटीकायां यथार्थं निर्णीय तत श्रीकृष्णभावनामृताख्यमहाकाव्यं कृत्वा श्रीराधाकृष्णतत्परिकराणा मष्टकालिकलीलापरिपाटीं अधिमाधुर्यास्वादसमर्थां अधिकारियोग्य भक्तेभ्य प्रदश्य भक्ततत्प्रभोरपुरणार्थं माधुर्यकादम्बिनीं कृत्वा माधुर्यवृष्टि प्रकार दर्शयित्वा चमत्कारचन्द्रिकाख्यस्वकृतग्रन्थान्तरे लीलाचमत्कारं तथा प्रेमसम्पुटे प्रेमप्रकारश्च प्रकटीकृत्य स्वकृतरागवर्त्मचन्द्रिकाख्यग्रन्थे विवृत भतश्चकगतभगवद्रागानुगाख्यभक्तिमतं संस्थाप्य श्रीमानन्दवृन्दावनचम्पोस्तथा भक्तिरसामृतसिन्धुस्तरोज्ज्वलनीलमणिस्तथा भागवतामृतस्य च सारसङ्ग्र मिव तेषां प्रतिमूर्तिरूपमिव सूक्ष्ममिव च सर्वपद्यावलीकमेऽसमर्थानां बाल बुद्धीनाञ्च पयसाम्यर्थ्यमानार्थं क्रमेण प्रीतिचिन्तामण्याख्यं विनाख्य किरणाख्य कणाख्यञ्च ग्रन्थं कृत्वा गानद्वारा श्रीराधाकृष्णयोरूपलीलादि सारसमारु – णै रसकमभक्तिभावार्थेन पूर्वचम्पादाख्यं पश्चिमचम्पादाख्यं ग्रन्थद्वयं महत्कृतं स्वकृतपदैर्विस्तार्य संक्षिप्तसन्दर्भस्य श्रीचैतन्यचरितस्य वेदान्तभाष्यं च केनापि कारणेनाप्रमाप्येव अन्यदपि सिद्धान्तादिद्वारा सम्प्रदायस्य

पिबन्ति ये भगवत आत्मन सतां
कथामृतं श्रवणपुटेन संभृतम्।
पुनन्ति ते विषयविदूषिताशयं
व्रजन्ति तच्चरणसरोरुहान्तिकम्॥

इत्यादिना भगवत् कथाया भागवतकथायाश्च श्रवणपठितपूर्व्वकभगवच्चरण प्राप्तिफलत्वेन तत्कथ्यतां महाभाग इत्यादिना सतामयं सारभृतां निसर्गो इत्यादिना च भक्तानां स्वतएव भागवतभगवत्कथायां प्रवृत्तिः च श्रादौ गुर्व्वादीनुक्त्वा भगवत्स्तुत्यादिना भगवत्कथायां भागवतकथामय स्तवामृताख्यं ग्रन्थं करोति श्रीविश्वनाथचक्रवर्त्तिनामा कविवरोऽष्टकमनुपदार्थमिति।

*Text*

संसारदावानललीढलोकत्राणाय कारुण्यघनाघनत्वम्।
प्राप्तस्य कल्याणगुणार्णवस्य वन्दे गुरोः श्रीचरणारविन्दम्॥ १॥
महाप्रभोः कीर्त्तननृत्यगीतवादित्रमाद्यन्मनसो रसेन।
रोमाञ्चकम्पाश्रुतरङ्गभाजो वन्दे गुरोः श्रीचरणारविन्दम्॥ २॥
श्रीविग्रहाराधननित्यनानाशृङ्गारतन्मन्दिरमार्ज्जनादौ।
युक्तस्य भक्तांश्च नियुञ्जतोऽपि वन्दे गुरोः श्रीचरणारविन्दम्॥ ३॥
चतुर्व्विधश्रीभगवत्प्रसादस्वाद्वन्नतृप्तान् हरिभक्तसङ्घान्।
कृत्वैव तृप्तिं भजतः सदैव वन्दे गुरोः श्रीचरणारविन्दम्॥ ४॥
श्रीराधिकामाधवयोरपारमाधुर्य्यलीलागुणरूपनाम्नां।
प्रतिक्षणास्वादनलोलुपस्य वन्दे गुरोः श्रीचरणारविन्दम्॥ ५॥
निकुञ्जयूनो रतिकेलिसिद्ध्यै या यालिभिर्युक्तिरपेक्षणीया।
तत्रातिदाक्ष्यादतिवल्लभस्य वन्दे गुरोः श्रीचरणारविन्दम्॥ ६॥
साक्षाद्धरित्वेन समस्तशास्त्रैरुक्तस्तथा भाव्यत एव सद्भिः।
किन्तु प्रभोर्यः प्रिय एव तस्य वन्दे गुरोः श्रीचरणारविन्दम्॥ ७॥
यस्य प्रसादाद्भगवत्प्रसादो यस्याप्रसादान्न गतिः कुतोऽपि।
ध्यायन् स्तुवंस्तस्य यशस्त्रिसन्ध्यं वन्दे गुरोः श्रीचरणारविन्दम्॥ ८॥
श्रीमद्गुरोरष्टकमेतदुच्चैर्ब्राह्मे मुहूर्त्ते पठति प्रयत्नात्।
यस्तेन वृन्दावननाथसाक्षात्सेवैव लभ्या जनुषोऽन्त एव॥ ९॥

**Colophon** *of the Text* इति श्रीगुर्व्वष्टकम् सम्पूर्णम्।

**End** *of the Commentary* यस्य गुरो प्रसादात् भगवत्प्रसादो भवतीत्यत प्रकाश यो मन्त्र स गुरु साक्षात् यो गुरु स हरि स्मृत। गुरुर्यस्य भवेत् तुष्टस्तस्य तुष्टो हरिः स्वयमिति। यस्य गुरोरप्रसादात् कुतोऽपि गतिर्न स्यात्।

तथाहि आदित्यपुराणे अविद्यो वा सविद्यो वा गुरुरेव जनार्दन । मार्गस्थो वाप्यमार्गस्थो गुरुरेव सदा गति ॥ अन्यच्च दैवे रुष्टे गुरुस्त्राता गुरौ रुष्टे न कश्चन । तस्मात् सर्व्वप्रयत्नेन गुरुमेव प्रसादयेत् ॥ ब्रह्मवैवर्त्ते अपि भ्रष्ट प्रपन्नो वा विरुद्धो अपि यो क्षुधा । गुरुश्च पूजनीयास्ते इत्यादि साधकस्य गुरौ भक्तिं मन्दीकुर्व्वन्ति देवता । यत्नोऽतोऽत्र व्रजेषु शिष्यो भक्त्या गुरौ कुर्व्वमिति । श्रीभागवते तु तु बहूनि प्रमाणानि सन्ति । अपि चत्वादि दोषदृष्ट्या गुरौ यदि कदाचिदवज्ञादि स्यात् तस्मात् तथा भगवति कस्मिंश्चिद् वैष्णवादौ भक्तिराहित्यम कुचेष्टादिना अन्यतो वा यदि गुरोरप्रसाद स्यात् तदा न कुतोऽपि गति स्यादिति द्वितीयेन गुरु प्रसन्न स्यात् तदेव कर्त्तव्यमिति भाव अतस्तस्य गुरोर्यश त्रिसन्ध्य ध्यायं स्तुवन् तस्य चरणारविन्दं वन्दे ॥ ८ ॥ यो जन एतदष्टकं पठति तेन वृन्दावननाथयो साक्षात् सेवा जनुषोऽन्ते एव लभ्या ॥ ९ ॥

(2) वृन्दाष्टकम् । Vrindistakam or eight stanzas on the greatness of Vrinda, by the same author with commentary in margin

Beginning *of the Commentary* हे वृन्दे ते तव चरणारविन्दं नुम स्तुम । गाङ्गेय स्वर्णस्य तथा चाम्पेयतडितोर्विनिन्दिरोचिषां प्रवाहेण स्नपितमात्मवृन्दं आत्मीयसमूहो यया हे तादृशि बन्धूकबन्धु बन्धूकस्य द्युतिरिव द्युतिर्यस्य एवम्भूतो दिव्यवासो यस्या हे तादृशि ।

*Text*

गाङ्गेयचाम्पेयतडिद्विनिन्दिरोचिःप्रवाहस्नपितात्मवृन्दे ।
बन्धूकबन्धुद्युतिदिव्यवासो वृन्दे नुमस्ते चरणारविन्दम् ॥ १ ॥
बिम्बाधरोदित्वरमन्दहास्यनासाग्रमुक्ताद्युतिदीपितास्ये ।
विचित्ररत्नाभरणश्रियाढ्ये वृन्दे नुमस्ते चरणारविन्दम् ॥ २ ॥
समस्तवैकुण्ठशिरोमणौ श्रीकृष्णस्य वृन्दावनधन्यधाम्नि ।
दत्ताधिकारे वृषभानुपुत्र्या वृन्दे नुमस्ते चरणारविन्दम् ॥ ३ ॥
त्वदाज्ञया पल्लवपुष्पभृङ्गमृगादिभिर्माधवकेलिकुञ्जा. ।
मध्वादिभिर्भान्ति विभूष्यमाणा वृन्दे नुमस्ते चरणारविन्दम् ॥ ४ ॥
त्वदीयदूत्येन निकुञ्जयूनोरत्युत्कयो केलिविलाससिद्धि ।
त्वत्सौभगं केन निरुच्यतां तद्वृन्दे नुमस्ते चरणारन्दिवम् ॥ ५ ॥
रासाभिलाषो वसतिश्च वृन्दावने त्वदीशाङ्घ्रिसरोजसेवा ।
लभ्या च पुंसां कृपया तवैव वृन्दे नुमस्ते चरणारविन्दम् ॥ ६ ॥

त्वं कीर्त्त्यसे सात्वततन्त्रविद्भिर्लीलाभिधाना किल कृष्णशक्तिः ।
तवैव मूर्त्तिस्तुलसी नृलोके वृन्दे नुमस्ते चरणारविन्दम् ॥ ७ ॥
भक्त्या विहीना अपराधलक्षै क्षिप्ताश्च कामादितरङ्गमध्ये ।
कृपामयि त्वां शरणं प्रपन्ना वृन्दे नुमस्ते चरणारविन्दम् ॥ ८ ॥
वृन्दाष्टकं यः शृणुयात् पठेद्वा वृन्दावनाधीशपदाब्जभृङ्गः ।
स प्राप्य वृन्दावननित्यवासं तत्प्रेमसेवां लभते कृतार्थः ॥ ९ ॥

**Colophon** *of the Text.* नास्ति ।

**End** *of the Commentary* भक्त्या रहितास्तथापराधलक्षैः कामादीनां तरङ्गमध्ये क्षिप्ताश्च वयं हे कृपामयि त्वां शरणं प्रपन्ना ॥ ८ ॥ पदाब्जयोर्भृङ्गः सन् वृन्दावननित्यवासं प्राप्य तत्र कृतार्थः सन् तयोः प्रेमसेवां लभते ।

**Colophon** *of the Commentary* इति श्रीवृन्दाष्टकम् ॥ * ॥

(3) शचीनन्दनविजयाष्टकम् । Sacinandanavijayāṣṭakam, eight stanzas on the victory of Śacinandana or Caitanya, by the same author.

**Beginning** *of the Commentary* श्रीकृष्णचैतन्यदेवस्य सर्व्वैव लीलातिमनोहरा तदप्यस्यावतारस्य प्रेमास्वादप्रेमदानमेव मुख्यप्रयोजनमतस्तत्सहितस्य तस्य विजयतां वर्णयति गदाधरेति—यथा वृन्दावनं समाविश्य श्रीकृष्णचैतन्यदेव आह—आश्लिष्टो गदाया अथवा स गां येन तेन यथा पर सम्बोधन अधर इति पाठेऽप्येष एवार्थः कथम् अनिर्व्वचनीय एको गुल्फी गदाम्बुद इति मधुरमूर्त्तिर्यदा आलोकितस्तदा स चैतन्यदेवो द्रवन् प्रेमोद्रेकेणान्धक्रत न समास अथच नैवर्थीर्भूतनवाम्बुद एतादृशार्थः निरवद्यतः च सन् शचीनन्दनो भुवि नुपतम् विजयते विशेषेण जयते सर्व्वोत्कर्षेण वर्त्तते । विशब्देनास्य अन्यावतारेषु प्रेमदानादेरभावात् एतेनोत्कर्षे कृष्णरूपस्य क्वापि विजयता बोध्यति ॥ १ ॥

*Text*

गदाधर यदाधर स किल यत्नमालोकितो
मधार्म्मिता गदाम्बुना मधुरमूर्त्तिरेकस्तदा ।
नवाम्बुद इव द्रवन् धृतनवाम्बुदो नैवर्थ्ये-
र्गुंठन् भुवि निरस्यवास्त्रिजयते शचीनन्दनः ॥ १ ॥
अलक्षितचरीं हरोन्मुदितमावत किंच इम-
मचावतिद्भुधावपोरगुणरत्नसम्पादिकाम् ।

यीऽदर्क पठति न निषेधमति निजधामनि दुर्लं स्वयमुरीकृत्य श्रीकृष्ण
किं कृत्वा प्रणयिरूपवर्गानुगं विधाय। निजप्रणययुक्तो योऽरूप, रूपगोस्वामी
तत्सानुगं विधाय कृत्वा अथवा निजप्रणयिरूपा ये वर्गा निजपार्ष-
दर्गा: ॥ ८ ॥

Colophon *of the Commentary* नास्ति ।

(4) सुरतकथामृताख्य' आर्य्याशतकम् । Suratakathāmṛtākhyam Āryā-atakam, one hundred Āryās on a discourse between Rādhā and Kṛṣṇa about their mutual affection, by the same author

Beginning *of the Commentary* श्रीराधाकृष्णाभ्यां नमः ।

श्रीरूपगोस्वामिचरणैः सुरतसूचकवाक्यानां सुरतापेक्षयाधिकानन्दजनकत्व
स्फुटमुक्तम्। विदग्धमाधवकाव्यादौ विस्तार्थ लिखितश्चेत्यत सुरतादपि
सुरतकथाया अधिकानन्दजनकत्वमायातमत सुरतकथासादस्य दिग्दर्शनार्थं
मेकादिवसीयसुरतकथामार्य्याशतकेन कथयितुमादौ श्रीरूपगोस्वामिनोर्क्तं
प्रार्थनाश्लोकं प्रमाणयति कदाहमित्यादि पद्ये कृष्णाराधयोरन्योन्यमित्यत्र
परस्परकथने सुरतकथाभिन्नत्वासम्भवात् सुरतकथाया एव रसबहुत्वात्।
सुरतकथैव सा कथा यदा श्रीकृष्ण प्राह—हे प्रिये मह्यमधरसुधां निकामं
यद्येद्य्सित न वितरसीदं चिर अतिकृपयोपि अनीषदान्यतमता दातृमता
कदाचिद् धत्ते त्वन्तु मदनुभूतातिप्रसिद्धा दाता ॥ १ ॥

Beginning *of the Text.* श्रीराधाकृष्णाभ्यां नमः ।

कदाहं सेविष्ये व्रततिचमरीचामरमरुद्
विनोदेन क्रीडाकुसुमशयने सम्पवपुषौ।
दरीगोवर्द्धने मम नववनक्लिन्नदलकौ
कृपाराधाकृष्णौ व्रजभवयुवानाविह युवाम् ॥ १ ॥

कृष्ण —

चिरमिद नेह यदस्रो वितरस्यधरसुधां निकामं मे।
अतिकृपयोपि कदाचिदवदान्यतमता जगं प्रिये धत्ते ॥ १ ॥
लयमपि न याति दाने प्रत्युत प्रहि रसाधिका लभते।
अधरसुधीत्तमविद्यां विबुधवराय मे देहि ॥ २ ॥
स्वान्ते विमति भवती स्वान्तेवासिस्थितिखिन्नं।
मयि किमु पूर्व्वं नादास्तस्मिमाममोघामपि विद्यमद्य तम ॥ ३ ॥

राधा

कुमरमधीनतिलम्भान्निर्मूलतलकोमलोद्गारे ।
प्रथयसि किमु निभृतध्वे घ्रातं पाञ्चिभ्यमसि तैरव ॥ ४ ॥
देवाधिपपदमपि मयि दास्या तत ममैव सुदवर्या ।
भवतार्थं तवद्दसे बते र्म्याभिवेद्यते तस्मात् ॥ ५ ॥
अयमपि परमोधर्मो द्राघा महतो तवैव वेदा ।
भुवनपवनमपि वेदे कृपाश्रयादीदृशं यदद्रो ॥ ६ ॥

**End** *of the Text*

प्रविशतु मने मनेरथ मुक्तिमपुरं जगन्तय ।
गाते निमोल्य दृशौ स्वजनपराञ्जी विधाय यथातु ॥ १०१ ॥
आम्रनवपल्लवैरलिभिल्यक्रमप्रसरेण तालकम्भन ।
मौनयतु गमनमनिल मद्यद्भोधितं निवपतु ॥ १०२ ॥
कमलविलितैर्भिन्नविते सरभयतो स्वामिनीरथाघोत्यम् ।
निद्राद्रविमवेन्द्र ममोदसिद्धा वर्यं जगत् प्रवताम् ॥ १०३ ॥
राधाकुण्डतटस्थितवासमहत्तं मद सोऽयम् ।
किमु वाञ्छितमतिदुर्लभे वस्तुनि तयोर्मनाम् सम्भाव्यम् ॥ १०४ ॥
अविरद्द्रगुलाव्यकिते शाके श्रवर्णस्थिते दिशाधीशे ।
सुरतकथ सतमुदगादुदयथ भक्तहृदमभसि ॥ १०५ ॥

**Colophon** *of the Text* सुरतकथामृताख्यानाख्यशतकं सम्पूर्णम् ।

**End** *of the Commentary* दन्यकर्त्ता भावावेशेनाभिलाषं कृत्वा पद्यानुद्दे केय देव्योदयात् स्वस्य तथायोग्यतां मत्वा पुनर्विचारिते केनापि मदनामृत । एतादृश को वा मद येन मम तादृशी वाञ्छा जाता । ततो विचार्य वितर्कयन्नाह— राधाकुण्डतटे चिरं स्थितिरेव वासरूप महासम्पदां अर्थं स प्रसिद्धो मद । तत्रते तादृशमदं विना अतिदुर्लभवस्तुनि तयो सेवारूपे मम वाञ्छितं किमु सम्भाव्यमस्तु नेत्यर्थ । तदाच येन केनापि प्रकारेण यदि राधाकुण्डतटे वास स्यात् तदा एतादृशी वाञ्छा स्वयमेवोदेदिति भाव ॥ अङ्कस्य वामा गतिरिति वेदो ख्यं शून्यं चन्द्र घट आ एक १०४ ॥ एवंगुणिते १६०० श्रीकृष्णतर्ज्यकशाके हर्षेति ज्येष्ठमासि सुरतकथाख्यमृतमुद्द वात् भक्तहृदयाकाशे सुदानन्द आगात् ॥ १०५ ॥

**Colophon.** नास्ति ।

(5) वृन्दावनाष्टकम् । Vṛindāvanāṣṭakam or the eight stanzas on the greatness of Vṛindāvana, by the same author

**Beginning** *of the Commentary* योगसिद्ध्यादिर्मम मास्तु प्रेमापि चेद्यदि न स्यात् मास्तु न भवतु ममतु वृन्दावने तत्रासक्तियत्नेन वासोऽस्तु ॥ १ ॥

**Beginning** *of the Text* नम श्रीवृन्दावनाय ।

न योगसिद्धिर्न ममास्तु मोक्षो वैकुण्ठलोकेऽपि न पार्षदत्वम् ।
प्रेमापि न स्यादिति चेत्तरां तु ममास्तु वृन्दावन एव वासः ॥ १ ॥
तार्णं जनुर्यत्र विधिर्ययाच सद्भक्तचूडामणिरुद्धवोऽपि
वीक्ष्यैव माधुर्यधुरां तदस्मिन् ममास्तु वृन्दावन एव वासः ।

**End** *of the Text*

मुदा हरण्मुखा विहङ्ग खेलन्ति कूजन्ति पिकालिकीरा ।
शिखण्डिनो यत्र नटन्ति तस्मिन् ममास्तु वृन्दावन एव वासः । ८ ।
वृन्दावनस्याष्टकमेतदुच्चैः पठन्ति ये निश्चलबुद्धयस्ते ।
वृन्दावनेशाङ्घ्रिसरोजसेवां साक्षाल्लभन्ते जनुषोऽन्त एव । ९ ।

**Colophon** *of the Text* नास्ति ।

**End** *of the Commentary* वृन्दावनस्थो श्रीराधाकृष्णयो । ९ ।

**Colophon** *of the Commentary* नास्ति ।

(7) सङ्कल्पकल्पद्रुमम् । Saṃkalpakalpadrumam one hundred and four stanzas on prayer to Rādhā by the same author

**Beginning** *of the Commentary* राधिकाप्राप्त्युपायमारभ्य मस्तकपर्यन्तं वर्णयित्वा अधुना तस्याः निकटे प्रार्थनां करोति प्रतश्लोके — हे वृन्दावनेश्वरि, हे यौवन कृपादीनां जलधिस्वरूपे त्वं अवधेहि, तव दासीभवानि दासीभूत्वा कान्त सहितां आलिभिः परितां च त्वां सुखयानि इदमेव अहं याचे ॥ १ ॥

**Beginning** *of the Text.* नमो वृन्दावनेश्वर्यै ।

वृन्दावनेश्वरि वयोगुणरूपलीला
सौभाग्यकेलिकरुणाजलधेऽवधेहि ।
दासीभवानि सुखयानि सदा सकान्तां
त्वामालिभिः परिवृतामिदमेव याचे ॥ १ ॥

End *of the Text*

> वृन्दावनावनिपते जय सोम सोम
> मौले सनन्दनसनातननारदेड्य ।
> गोपीश्वर व्रजविलासि युगाङ्घ्रिपद्मे
> प्रेम प्रयच्छ निरुपाधि नमो नमस्ते ॥ १०२ ॥
> हित्वाखिला किल वासना भजत रे वृन्दावन तत्र तं
> राधाकृष्णविलासमाधुरिरसास्वादं न चेद्विन्दथ ।
> त्यक्तुं शक्नुथ न स्पृहामपि पुनस्तत्रैव तद्वन्धवो
> विस्रब्धा श्रयते ममैव सतत सङ्कल्पकल्पद्रुमम् ॥ १०३ ॥

Colophon *of the Text* नास्ति ।

End *of the Commentary* रे मम बन्धवः यूयं वृन्दावनं भजत । तत्र वृन्दावने चेद् यदि तं प्रसिद्ध राधाकृष्णविलासमाधुरिरसास्वादं न विन्दथ तत्र विलासरसास्वादे स्पृहामपि त्यक्तुं न शक्नुथ तदा विस्रब्धा' विशिष्टा श्रद्धा यासु ता श्रद्धारहिता वा मम बन्धवः इमं सङ्कल्पकल्पद्रुमं श्रयत । अस्य पाठादेव सम्यक् रसास्वादोऽन्येषामपि भविष्यतीति । १०४ ॥

Colophon *of the Commentary* नास्ति ।

(8) **राधिकाध्यानामृतम्** । Rādhikādhyānāmṛtam, *consisting of thirty-two stanzas on meditation of Rādhikā, by the same author*

Beginning *of the Commentary* श्रीवृन्दावनेश्वर्या ध्यानामृतं व्याचिख्यासुः श्लोकेनाह तडिदिति स्वकान्त्या करणभूतया तडिदादिभास कान्ती भर्त्सनतिरस्कारपिशाचस्य स्वरूपस्य विलास कस्य जनस्य वर्णनविषयीऽस्तु न कस्यापीत्यर्थः । सुधा अमृतं ऊर्ध्वोद्गत गुरुत्वादिभ्याधादि पथ्यासत इति नाम मधवपाऽपरोऽपि प्राकृतत्वात् पश्चादेतत्तादिक भवताम् श्रीतु कर्णं कं रोचक एव न त्वया इव गुणमाधुर्यादिभि पूर्ण इति भाव । १ ।

Beginning *of the Text* श्रीवृन्दावनेश्वर्यै नमः ।

> तडित्सम्पकमर्वकाश्मीरभास
> स्वकान्त्या भर्त्सयन्त्यङ्घ्रिसा विलास ।
> स्वरूपस्य तस्यास्तु कस्यास्तु वर्ण्यं
> सुधीश्वरो नाम वर्णोऽपि कर्ण्यं । १ ।

**End** *of the Text*

सञ्जागर्ति तस्या परीवारश्चैत
कटेऽनुचर्य्य रम्यलीलासमन ।
श्वाघ्यष्टयामिकममुष्या सपर्य्या
यथाकालमाचर्य्यते तेन चस्या ॥ १२ ॥

**Colophon** *of the Text* इति श्रीराधिकाध्यानामृतम् ॥

**End** *of the Commentary*. तस्या राधिकाया य परीवारस्तस्य चैतत्स्व रम्यलीला समत महासत्कर्पूरलिप्तो नानिल्पर अनुष्ठाय जागर्त्ति परिवारपदेन साधक भक्तोऽपि तदभिमानी तस्य चलसि यदि सदा सहासलीला जागर्त्ति तदा तेनापि अमुष्या अष्टयामिकी अर्च्चा सपर्य्या तेन परीवारेण यथाकाल माचय्यत क्रियते अनेन ध्यानेन तस्य फलमिदमुक्तम् ॥ १२ ॥

**Colophon** *of the Commentary* इति श्रीराधिकाध्यानामृतव्याख्या ॥ ० ॥

(9) **स्वप्नविलासामृतम्** । Svapnavilasâmṛitam nine stanzas describing a dream of Krisna about Radha, by the same author

यस्मिन् श्रीकृष्णकर्त्तृक राधिकास्वप्नदर्शनवर्णनम् नवभि श्लोकैर्वर्णितमस्ति ।

(10) **जगन्मोहनमिष्टदेवम्** । Jaganmohanamiṣtadevam, a prayer to Jaganmohana, the God of special worship consisting of nine stanzas, by the same author.

तत्रापि जगन्मोहनमिष्टदेवस्य सकाशे नव प्रार्थना श्लोका वर्त्तन्ते ।

(11) **गीतावलि** । Gitavalih, consisting of songs on Krisnalila, by the same author

**Beginning** *of the Commentary* श्रीगोविन्देत्यादीनि सम्बोधनपदानि । व्रजजने सह मन्नर्म्मकर्म्मकेवा गीता खेलाया गाथा कथा यस्य हे तथाभूत कृपया मां प्रेमसुधा पायय । तथा कृपया मां बहुधा बहुप्रकारा निजसेवा कारय । कृपया कारय इत्यादि पदेन प्रेमसुधापान सेवादौ च कृपाकृपां विना स्वस्य सामर्थ्याभावो व्यक्तित । मधुरिमो गरिमा गौरवेण सरस करुणालक्ष्य यल्लोचनकोणस्य विकाश तत् तथा चातिमधुरं करुणा कटाक्ष कृपया मामनुभावय अनुभवं कारय । यद्वा मधुरिमा गरिमा यत्र हे तथाभूत हे सरस हे करुणालय इत्यादि पृथक् पदानि ।

**Beginning** *of the Text* अथ गीतावली ।

पावय स्वपदा प्रेमसुधा मां कारय निजसेवा बसुधा मां गोविन्दमदन
गोपालगोपीनाथ । श्रीकृष्ण हरे मङ्गलनन्दविलोलाभावा । मधुरिमवरिम
मरन्दमदनानन्दलोचनकोविदवाद । मामनुभावय भावय निजगुणवदन
कलापविलास । श्रीरूपसनातनविद्यारतिविधौ राधे हरिरसिते । मम निज
भवभयरोगतत माधुरीकुरु भगिन ॥ १ ॥

**End** *of the Text* तदनुगा ऽत्र गोविन्द इमामतिदिव्य मनि निजवयसा मां जीवय मन्दस्मित
सुधया । पीतवसन मम बल्लव सखी नवनीलनलिनकमनीयतनो । वल्लव
नवरवतंस हिमी वल्लभ माधुरीकुरु मां ॥ ११ ॥

**Colophon** *of the Text* समाप्तेयं गीतावली ।

**End** *of the Commentary* पीत वसन यस्य स वसनोल्लनलिनादपि कमनीया तनुर्यस्य सम्म
मनस्यपि चक्रवर्ति कल्य मैव । तथाच भगवत्प्रेम विना भक्तरूप
गुणमाधुर्यादौ मनस प्रवृत्तो न भवति न चापि च । चन्द्रत्वात्
अविद्याराहतत्वात् विषयाभिनिवेश एव जायते । वल्लवनगरस्य मन्मथस्य
वतंस हे चिरोभूषणरूप । हे हिमी सर्वं कर्तुं समर्थ वल्लभ मां चिर
इति पदद्वयम् । त्वं यथा चिरोऽभवेस्तथा माधुरीकुरु सौकुमार्ये ।
पदद्वयं सार्धेनान्वयमिति ॥ ११ ॥

**Colophon** *of the Commentary* नास्ति ।

---

*No* 100 पदकल्पतरु । Padakalpataruh Substance, country made white paper, 15 × 6 inches. Folia, 459 Lines, 12 in a page Character, Bengali. Date, ? Appearance, nearly fresh Verse. Not correct. Incomplete

An anthology of Padas or Bengali songs of Vaiṣṇava poets collected under the name of Padakalpataru by Vaiṣṇavadāsa. In this work two introductory verses only are in Sanskrit

***Beginning.*** श्रीकृष्णचैतन्यचन्द्राय नमः

वन्देऽहं श्रीगुरो श्रीयुतपदकमलं श्रीगुरून् वैष्णवांश्च
श्रीरूपं साग्रजातं सगणरघुनाथान्वितं सजीवम् ।

मायेत माधुर्य परिमलमहितं कृष्णचैतन्यदेवम्
श्रीराधाकृष्णपादान् सहगणललिता श्रीनिवासान्वितांश्च ॥
वन्दे श्रीकृष्णचैतन्य कारुण्यातीतविग्रहम् ।
स्वलीलाकारुण्यातीतधामभक्त्यादिभि सह ।

पुस्तकेऽस्मिन् श्रीगोविन्ददासप्रभृतिविरचितानि वैष्णवगीतानि वर्त्तन्ते, तानि पदकल्पतरुनाम्ना प्रसिद्धो ऽयं निबन्ध ।

---

No 101. श्रीमन्नामामृतसमुद्र । Śrīmannamāmṛtasamudrah
Substance, country made white paper, 10 × 4 inches Folia, 8 Lines, 13 in a page Character Bengali Date, ? Appearance, not old Verse. Not correct Complete

A Bengali poem invoking Gauranga and his followers, by Narahari Dāsa

पुस्तकेऽस्मिन् श्रीनरहरिदासकृतानि श्रीगौराङ्गतत्सहचरसम्बोधनपदानि बहूनि बङ्गभाषा लिखितानि पद्यानि सन्ति ।

---

No 102 श्रीराधाकृष्णपूजापद्धतिनिबन्ध । Śrīradhākṛṣṇapujā paddhatinibandhah Substance, white foolscap paper 12 × 4 inches Folia, 7 Lines, 4 8 in a page Character Bengali Date, ? Appearance, nearly fresh Verse and prose Generally correct Complete

A manual of worship of Radha and Kṛṣṇa In the beginning the superiority of Radha over her companions has been established from the authority of several Puranas

**Beginning.** श्रीश्रीराधाकृष्णाभ्यां नम । श्रीराधाया प्राधान्यम् ।
पाद्मे कार्त्तिकमाहात्म्ये उत्तरखण्डे तत्कृष्णप्रसङ्गे ।
यथा राधाप्रिया विष्णोस्तस्या कुण्डं तथा प्रियम् ।
सर्व्वगोपीषु सैवैका विष्णोरत्यन्तवल्लभा ॥ इति
अतएव मात्स्ये शक्तित्वसाधारण्येनाभिन्नतया गणनायामपि तस्या एव वृन्दावने प्राधान्याभिप्रायेणाह ।

वाराणस्यां विशालाक्षी विमला पुरुषोत्तमे।
रुक्मिणी द्वारवत्यान्तु राधा वृन्दावने वने॥ इति

तथाच बृहद्गौतमीये तस्या एव मन्त्रकथने—

देवी कृष्णमयी प्रोक्ता राधिका परदेवता।
सर्वलक्ष्मीमयी सर्वकान्तिः सम्मोहिनी परा॥ इति

ऋक्परिशिष्टश्रुतावपि

राधया माधवो देवो माधवेनैव राधिका।
विभ्राजन्ते जनेष्वेति।

अतएवाह अनयाराधितो नूनमित्यादि। भविष्योत्तरे श्रूयते—

गोपालिपालिका धन्या विशाखाद्या धनिष्ठिका।
राधानुराधा सोमाभा तारका दशमी तथा॥ इति

विशाखा ध्याननिष्ठिकेति पाठान्तरम्। तथा दशम्यपि तारकाख्यैवेत्यत्र।
दशमीत्यप्येकं नाम वा।

*After* this it enumerates thirty-two bodily signs of a Mahā-puruṣa, thus—

पञ्च दीर्घं पञ्च सूक्ष्मं सप्त रक्तं षडुन्नतम्।
त्रिह्रस्वं पृथु गम्भीरं द्वात्रिंशल्लक्षणो महान्॥
बाहू नेत्रान्तरञ्चैव जानुनी नासिके तथा।
स्तनयोरन्तरञ्चैव पञ्च दीर्घं प्रशस्यते॥
सूक्ष्माण्यङ्गुलिपर्वाणि दन्तकेशनखत्वच
पञ्च सूक्ष्माणि यस्यैव ते नरा दीर्घजीविनः।
पाणिपादतलौ रक्तौ नेत्रान्तश्च नखानि च।
जिह्वाधरौष्ठतालूनि सप्त रक्तं प्रशस्यते॥
नासाभिश्च दन्ताश्च ललाटञ्च शिरस्तथा।
हृदयञ्चैव विज्ञेयमुन्नतं षट् प्रशस्यते॥
ग्रीवा चैव कटिश्चैव तथैवोदरमेव च।
ह्रस्वानि त्रीणि वै यस्य ते नरा दीर्घजीविनः॥
स्वरोऽसत्त्व नाभिश्च त्रिगम्भीरं विधीयते।
भालं वक्ष कटीरञ्च त्रिविस्तीर्णं प्रशस्यते॥

After this the Sakhis or female companions of Rādhā and Kṛṣṇa are thus enumerated—

मत्स्यध्वजे ॥ १ ॥ किरणाख्य ॥ २ ॥ मुषिका ॥ ३ ॥ अष्टकमला ॥ ४ ॥
वनमाली ॥ ५ ॥ मुद्रिका ॥ ६ ॥ कुण्डिका ॥ ७ ॥ अङ्गुरीया ॥ ८ ॥
॥ ९ ॥ पद्मा ॥ १० ॥ भद्रा ॥ ११ ॥ मन्दारश्री ॥ १२ ॥

End. अथ पूजाविधि ।

यथोक्तेन क्रमादिवन्ध्यपात्रान् प्रजयान्वकान् सम्पूज्य तत्सौभद्रमिनादिशन्तं भगवान् श्रीमते नमः । इत्यनेन क्रमविधानेन संपूजयत् ॥ अथ श्रीकृष्णायुधा । पाञ्चजन्याय ॥ १ ॥ सुदर्शनचक्रम् ॥ २ ॥ कौमोदकी गदा ॥ ३ ॥ पद्म ॥ ४ ॥ शार्ङ्गधनुः ॥ ५ ॥ एतान्यायुधानि च सपूज्य तत श्रीकृष्णस्य सर्वायुधेभ्यो नमः ॥ इत्यनेन क्रमविधानेन संपूज्य विसर्जयेदिति । अमन्त्रम् । अमन्त्रेति विसर्जनवाक्य मन्त्रोवनपूर्वकमेवेति शेयम ।

क्लीं कृष्णाय गोविन्दाय गोपीजनवल्लभाय स्वाहा । इत्यष्टादशाक्षरमंत्रो कामजनकामनमन्त्रराज ॥ १ ॥ २ ॥ ३ ॥ श्रीं राधायै नमः ॥ इति षडक्षर मन्त्रराज ॥ क्लीं कामदेवाय विद्महे पुष्पबाणाय धीमहि तन्नोऽनङ्गः प्रचोदयात् ॥ इति कामगायत्री ॥ श्रीं गान्धर्विकायै विद्महे कृष्णप्रियायै धीमहि तन्नो राधा प्रचोदयात् । इति राधागायत्री ॥ * ॥ ० ॥ * ॥ ० ॥ गोपीनाथाय विद्महे गोपीवल्लभाय धीमहि तन्नो कृष्ण प्रचोदयात् ॥ इति गोपालगायत्री ॥ * ॥ ० ॥ * ॥ ० ॥ ओं नमो नारायणाय ॥ इति अष्टा क्षरमन्त्रराज । ओं नमो भगवते वासुदेवाय ॥ इति द्वादशाक्षरमन्त्रराज ।

Colophon. नास्ति ।

विवरणम् श्रीकृष्णराधापूजापद्धतिरूपोऽयं निबन्ध ।

---

No. 103. गोविन्दलीलामृतम् । Govindalīlāmṛitam Substance, country made colourless paper, 11 × 4 inches Folia, 223 (of which fol. 1–113 both including and fol 123-134 both including are wanting) Lines, 3-5 in a page Character, Bengali Date, ? Appearance, very old Verse Not correct. *Incomplete*

A poem relating the adventures of Kṛiṣṇa at Vṛindāvana, by Raghunātha Bhatta, complete in twenty-three chapters already described.

विवरणमनुक्तपूर्वम् ।

---

No. 104. हरिभक्तिविलासटीका ( दिग्दर्शिनी ) । Haribhakti vilāsaṭīkā (Digdarśinī Substance country made white paper, 10×4 inches. Folia, 20 Lines, 7-3 in a page. Character, Bengali Date ? Appearance, nearly fresh Prose Not correct Incomplete

The commentary on the Haribhaktivilāsa, entitled Digdarśinī, already described This Codex contains upto the end of the first chapter only

पुस्तकेऽस्मिन् हरिभक्तिविलासटीकाया दिग्दर्शिन्या प्रथमविलासमात्रं वर्त्तते ।

---

Under this No we find also a fragment of the text of the Haribhaktivilāsa.

पुस्तकेऽस्मिन् हरिभक्तिविलासस्यापि कतिपयानि पत्राणि ।

---

No 105. उज्ज्वलनीलमणि । Ujjvalanīlamaṇiḥ Substance, country made white paper, 14×4 inches Folia, 105 Lines, 5-7 in a page Character, Bengali Date, ? Appearance, old Prose and verse. Generally correct. Complete

Another complete copy of the Ujjvalanīlamaṇiḥ, described before

विवरणमुक्तपूर्वम् ।

---

No. 106. मुक्ताचरितम् । Muktācaritam Substance, country made white paper, 15×5 inches. Folia, 48 Lines, 3-10 in a page Character, Bengali Date, ? Appearance, very old Prose Not correct. Complete.

A story in prose supposed to be told by Kṛṣṇa under the name of Muktācarita. Anonymous. In order to make the purport of the work clear to the readers we quote below the introductory part of it in extenso.

**Beginning.** श्रीराधागोविन्दौ जयताम् ॥

> कन्दर्पकोटिरम्याय स्फुरदिन्दीवरत्विषे ।
> जगन्मोहनलीलाय नमो गोपेन्द्रसूनवे ॥
> कथचित्कथयिष्यामि सुकृतानां मञ्जितात्मनो ।
> मिथोजयार्थिनोर्वन्दे राधामाधवयोर्युगम् ॥
> निजानुमुक्तखिता भक्तिसुधामर्पयितुं क्षितौ ।
> उदितं यं शचीगर्भव्योम्नि पूर्णं विधुं भजे ॥
> नामश्रेष्ठं मनुमपि शचीपुत्रमत्र स्वरूपं
> रूपं तस्याग्रजमुरुपुरीं माथुरीं गोष्ठवाटीम् ।
> राधाकुण्डं गिरिवरमहो राधिकामाधवाशां
> प्राप्तो यस्य प्रथितकृपया श्रीगुरुं तं नतोऽस्मि ॥
> हरिचरितामृतलहरीं वृन्दाविपिनानुरागिसंभूताम् ।
> रसवद्वृन्दारकगणपरमानन्दाय तनवाम ॥

एकदा किञ्चिन्मानवयतपूर्ववृत्तान्तया सत्यभामया कृष्ण साकूतं पृष्ट —

> लतास्ता मधुरा कस्मिन् जायन्ते धन्यगोवृति ।
> नाथ मत्कङ्कणव्यक्त यासां मुक्ताफलं फलम् ॥

ततस्तद्वृत्तान्तमधुरत्वात् कृष्ण सानन्दोन्निर्वर्ण्य विहस्याह —

> गत स कालो यत्रासीन्मुक्तानां जन्म वीरुधु
> वर्तन्ते साम्प्रतं तासां हेतव शुक्तिसम्पुटा ॥

ततस्तदपूर्वं श्रुत्वा सविशेषश्रवणोत्कण्ठितया वाढमाम्रेडित कृष्ण पुनराह । एकदा कार्तिके मासि गोकुले गोवर्द्धनगिरौ दीपमालिका महोत्सव आसीत् । तत्र सर्वो जनो विविधनेपथ्यसामग्रीभ्यां संस्काराय साधनाय च परमासक्तोऽभूत् । गोप्यश्च प्रसाधितसाधना आत्मनां भूषणार्थं नानालङ्कारसंस्कारसाधनपरा बभूवु । राधा तु मान्यवरत्वात् सरसीतीरोपान्तमाधवीवनु मालिकायां स्वसखीसमुदयेन परमोत्तममुक्ताभि विविधभूषणानि रचयितुमारेभे । मया च विचक्षणीविदग्धार्थनामकीर कुमारमुखतत्तन्निशम्य सकौतुकं तत्र गत्वाऽनिमेषास्पदस्य स्वी-हरिणीति नाम्नीविंशुगलस्य भूषणोद्देशेन तासां सकाशं प्रार्थितानि + + +
\+ + + + + + +
ततस्तासामीषत्स्मिताऽन्योन्यमालोकयन्तीनां मध्ये प्रगल्भा ललिता विहस्य सरोषमिव व्याजहार । अये नागर एतानि बहुमूल्यानि मौक्तिकानि

इत्यत्रादिकौशलानन्तरं गोकुलपुरप्रवेशसम्पादयित्रीं परममङ्गलकृतोज्ज्वलित यात्रां विधाय सचिवगणनिकृत्स्नेन श्रीमदग्रजमहानुभावं गोकुलजनमात्रैमनुग- *वाञ्छितमपि द्वारकापुराभिमानदर्पमभिवन्दस्य साहैमुक्तवर्तोच्छिणीश्वराभ्यां* श्रीमता नान्दीमुखीपादेन श्रीगोकुलोपकल्पमासाद्य प्रमदसम्भूतचिराभिलषित निजाभीष्टमङ्गारनिकटोपालिधानमाना. श्रीमति निजभवनपुरे शुभप्रवेशमहत्त्वं करिष्यतीति सुहृद् सत्यभामया निर्णीतमस्तीति तत् परिवेशितमधुरसमा- चारसुधासारनानन्दासारसम्भृता श्रवणपथके समापद्य परमसौभाग्यवती सत्यभामा श्रीमुकुन्दं सल्लाप। सखि समग्रवी एतन्मधुररङ्ग वार्त्तांश्रव- णादतीवोत्कण्ठितास्मि श्रीमद्देवेन्द्रेण सार्द्धं गोविन्दगोष्ठमवाप्य राधाश्रीमज्ज- पसरीरभेणाद्यात्र वाससितुमभिलषामि। सत्यभामा—सखि तथैव सर्वथा भवतु भवत्या इति ॥ ० ॥

आददानस्तृणं दन्तैरिदं याचे पुनः पुनः।
श्रीमद्रूपपदाम्भोजधूलिः स्यां भवे भवे ॥ ० ॥
*यस्याज्ञासुधया मनोषितधिया मुक्ताचरित्रैर्मया*
गुच्छं पुष्पभरैर्व्यधायि य इह श्रीरूपसंज्ञिया।
श्रीवाल्लभसर्वाश्रीविलसतीसत्येव इह षटपदी
प्रायेण परिभूषितं नु तनुतां तत्केलिश्रीभूतकथी ॥
*मुक्ताचरित्रपुष्पोघैर्गुच्छ गुम्फितमद्भुतं।*
वर्त्तयन्तु यत्नवेदात् श्रीमद्रूपगणोत्सव ॥
यस्य सद्गुणलतोऽद्भुता मया मौक्तिकोत्तमकथा प्रचारिता।
तस्य कृष्णकविभूपतेर्व्रजे सङ्गतिर्भवतु मे भवे भवे ॥ ० ॥

Colophon. इति मुक्ताचरित्रं समाप्तम्। यस्य श्रवणमात्रेण पापविष्टो भवति वर भूतेन दुष्टदुर्गतदुर्लभदुराचारदीनहीनपतिताधमपापिष्ठपामरलब्धधीन केनचित् रसिकदासनाम्ना मत्तमूर्खतोऽधिकतरेण प्रेमशून्यनिष्फलप्राण भूतेन लिखितम् ॥ ० । * ॥ ० ॥

विवरणम्—मुक्ताचरितं नाम गोकुलं श्रीकृष्णकर्तृकसकलमुक्ताफलविषयकादन्यापारमिदमस्तीयम्

---

No. 107. रसनिरूपणग्रन्थः। *Rasanirūpaṇagranthaḥ* Substance, white foolscap paper, 14 × 5 inches *Folia,* 12 *Lines,* 8 *in a page* Character, Bengali Date, ? Appearance, *not fresh, torn in parts* Prose and verse Not correct *Incomplete*

A w rk treating of Rasas or sentiments and Bhāvas or emotions with their varieties each illustrated with a Sanskrit verse on the adventures of Kṛiṣna and Radhā as hero and heroin and their companions Anonymous

Beginning श्रीश्रीकृष्णचैतन्यचन्द्राय नमः ।

अविद्यालम्बना गोका कृष्णस्य च वल्लभा

अत्र विषयालम्बनं नायकचूडामणि श्रीकृष्ण । यथा—

पदयातिविनिर्जुतस्मरपराङ्कपीडति

दृंगञ्चलकलानटीपटिमभिर्मनोहारिणी

स्फुरन्नवघनाकृति परमदिव्यलीलानिधि

क्रियाच्छु वो जनमयोयुवतिभाग्यसिद्धिर्मुदम् ।

अयं सुरम्यो मधुर सर्वसल्लक्षणान्वित ।

बलीयाम्नवतारुण्यो वावदूक प्रियम्वद ॥

सुधी सत्प्रतिभोधीरोविदग्धश्चतुर सुखी ।

कृतज्ञो दक्षिण प्रेमवश्योगम्भीरताम्बुधी ॥

वरीयान् कीर्तिमान् नारीमोहनो नित्यनूतन ।

अतुल्यकेलिसौन्दर्यप्रेष्ठवंशीस्वनाङ्कित ।

इत्यादयोऽस्य मधुरे गुणा कृष्णस्य कीर्तिता

उदात्तादिस्वभावा तु पुरस्तैव प्रदर्शिता ।

प्रथम गोकुलमथुराद्वारकास क्रमेण पूर्णतम, पूर्णतर पूर्ण इति त्रिविध

End नास्ति ।

Colophon नास्ति ।

विवरणम्—रसविषयकग्रन्थविशेष ।

---

No 108 महाप्रभुरकरचा । Mahāprabhurkaraca Substance, country m le white p p r 12 × 4 inches Foli 10 Lines, 8 13 in a page Character, Bengali Date ? Appearance not fresh Not correct Complete

Bengali songs of special character on Caitanya life and exploits with the na ne of Mahāprabhurkaraca by Vāsu leva Ghoṣa

पुराणैरपि महाभारतरामायणाभिधानि वाल्मीकिव्यासविरचितानि चैतन्यचरितविषयकाणि कानि बहुभाषागीतानि सन्ति।

---

**No. 109. संक्षेपभागवतामृतम्।** Saṃkṣepabhāgavatāmṛtam

Substance, country made white paper, 15 × 5½ inches Folia, 32 Lines, 8-10 in a page Character, Bengali Date, ? Appearance, nearly fresh Verse and prose Not correct Complete

A sketch of the Bhāgavatāmṛita, a large work by Caitanya relating to Kṛiṣṇa and his devotees with allusions from several Purāṇas and Bhaktiśāstras The work is divided into two parts the first is Kṛiṣṇāmṛita, and the second Bhaktāmṛita This sketch too has been made according to the original text Anonymous.

**Beginning.** श्रीकृष्णचैतन्यचन्द्राय नमः।

नमस्तस्मै भगवते कृष्णायाकुण्ठमेधसे।
यो धत्ते सर्वभूतानामभवायोशतीः कलाः ॥१॥
कृष्णवर्णं त्विषा कृष्णं साङ्गोपाङ्गास्त्रपार्षदं।
यज्ञैः सङ्कीर्तनप्रायैर्यजन्ति हि सुमेधसः ॥२॥
कृपारविन्दनिष्यन्दमकरन्द सुदिनां।
समानन्द मकरन्दमधु बन्धुरात्मनो ।३॥
श्रीचैतन्यस्य गतो हर कृपानि न कः।
सङ्ग्रहे भागवतामृत विभज्य सङ्ग्रहः ॥
भागवतामृतस्य श्रीमद्रूपवरानुजः।
यदाश्रयेण वदन्ति निर्दिष्टः ॥४॥
तत्र श्रीभगवतः कृष्णस्य स्वरूपनिरूपणं यथा।
आदौ कृष्णामृतं तत्र भक्तामृतं च वर्ण्यते ॥
सिद्धान्तं तु विभागार्थं समासेन वर्ण्यते।
भगवतां स्वांशानां सर्वत्र दर्शनात् ॥५॥
ततः शास्त्रानिर्णीतं शास्त्रप्रमाणम्।
स्वयं स्वरूपमात्रेण श्रीकृष्ण परमाद्भुत ॥६॥
किञ्च तस्य निष्ठानां दर्शनादिविधानतः।
यथोचितम् समग्रं तत्त्वदर्शनादयोऽपि ॥७॥

यथोपाध्येषु मुख्यत्वं बल्लभमकर्षभूमत ।
कृष्णस्य तत्स्वरूपाणि निरूप्यन्ते क्रमादिह ॥ १० ॥
स्वयं रूपस्तदेकात्मरूप आवेशनामका ।
इत्यसौ त्रिविधं भाति प्रपञ्चातीतधामसु ॥ ११ ॥

**End.** आदिपुराणे च श्रीमदर्जुनवाक्यम्—

चैलोक्ये भगवद्भक्ता, के त्वां जानन्ति सर्वथा ।
केषु वा त्वं सदाधार केषु प्रेम तवातुलम् ॥

श्रीभगवद्वाक्यम् ।

न तथा मे प्रियतमो ब्रह्मा रुद्रश्च पार्थिव ।
न च लक्ष्मीर्न चात्मा च यथा गोपीजनो मम ॥
भक्ता मामनुरक्ताश्च कति सन्ति न भूतले ।
किन्तु गोपीजनः प्राणाधिकप्रियतमो मम ॥
न मां जानन्ति मुनयो योगिनश्च परन्तप ।
न च रुद्रादयो देवा यथा गोप्यो विदन्ति माम् ॥
न तपोभिर्न वेदैश्च नाचारैर्न च विद्यया ।
वशोऽस्मि केवलं प्रेम्णा प्रमाणं तत्र गोपिका ॥
मन्माहात्म्यं मत्सपर्यां मच्छ्रद्धां मन्मनोगतम् ।
जानन्ति गोपिकाः पार्थ नान्ये जानन्ति सर्वथा ॥
निजाङ्गमपि या गोप्यो ममेति समुपासते ।
ताभ्यः परं न मे पार्थ निगूढप्रेमभाजनमिति ॥
न चिन्त प्रेमभाग्धन्यास्ता वाञ्छेदयमुद्धव ।
पादरजोऽञ्चितं येन तत्पादाब्जमपि याचते ।

तथाहि श्रीदशमे ।

आसामहो चरणरेणुजुषामहं स्यां
वृन्दावने किमपि गुल्मलतौषधीनाम् ।
या दुस्त्यजं स्वजनमार्यपथञ्च हित्वा
भेजुर्मुकुन्दपदवीं श्रुतिभिर्विमृग्याम् ॥
इति कृष्ण निषेव्याये कृष्णश्चोपासकोत्तमे ।
उक्ता महादयुप्याद्यरवग्र्यं मतमुद्धव ।
तत्रापि सर्वगोपीनां राधिकातिवरीयसी ।
सर्वांऽधिरूपेण कथिता यत् पुराणागमादिषु ॥

यथा पाद्मे—

यथा राधाप्रिया विष्णोस्तस्याः कुण्डं प्रियं तथा ।
सर्व्वगोपीषु सैवैका विष्णोरत्यन्तवल्लभा ॥

आदिपुराणे च—

त्रैलोक्ये पृथिवी धन्या यत्र वृन्दावनं पुरम् ।
तत्रापि गोपिका पार्थ यत्र राधाभिधा मम ॥ इति ॥ ॥

Colophon. इति श्रीव श्रीभागवतामृते श्रीभक्तामृत नाम परखण्ड समाप्तम् ॥ * ॥

श्रीमन्मदनगोपाल वन्दारण्यपुरन्दरम्
पुरन्दरपुरीद्वारश्रीचरणाश्रितुम नुम ॥
श्रीगोविन्दं व्रजेन्द्रस्य सुत (स्याथ ?) परात्परम् ।
सुरन्द्रमस्यपादाब्जं मुनीन्द्रैरपि सम्मृतम् ।
श्रीगोपीनाथनाथानां चरण माधव मुदा ।
सुधाकरकराकारा यत् कृपा जगता मुदे । ० ॥ ॥ ॥ ० ॥ ॥
हरे कृष्ण हरे कृष्ण कृष्ण कृष्ण हरे हरे ।
हरे राम हरे राम राम राम हरे हरे ॥ ० ॥ ॥ ॥ ० ॥
श्री नम अचिन्त्यानन्दरूपाय ब्रह्मणे परमात्मने ।
अचिन्त्यानन्दरूपाय जगतामाश्रयाय च ॥

विवरणम्—श्रीवैष्णवतोषण्याम् निरूपितोऽयं श्रीमन्महाप्रभुगौराङ्गकृतभागवतव्याख्यासार रूप ।

---

No 110 श्रीमद्वेदस्तवीय संक्षिप्तसुगमसारार्थसङ्कलन । Srimad vedastavIya samksiptasugamasararthasamkalanam Substance country made white and yellow paper 16 × 5 inches Folia, 41 Lines 2–13 in a page Character, Bengali Date ? Appearance not old Prose Generally correct Complete

An easy explanatory note on the Srutistava belonging to the Dasamaskandha of the Bhagavata with illustrations from several Puranas and Vaisnava works &c Anonymous

Beginning. श्रीकृष्णचैतन्यचन्द्राय नम । श्रीहरिदासदत्त शरणम् ।

श्रीश्रीकृष्णं वन्दे चैतन्यनामधरम् ।
गुरु विद्यागुरुं भक्तौ तत्कृपैरवर्ककम् ।

No. 111 चैतन्यचन्द्रामृतम् । Caitanyacandrāmṛtam Substance, country made colourless paper, 18 × 6 inches Folia, 6 Lines, 11–13 in a page. Character, Bengali Date, Śaka 1719 ? Bengali era 1204 Appearance, very old, worn out, partly torn and writing effaced in parts. Verse Not correct Complete

A little poem consisting of 141 Sanskrit verses on Caitanya, by Prabodhānanda Sarasvatī The author before his conversion to Vaiṣṇavism was a follower of the non dual theory of Śankarācārya and his name was Prakāśānanda In the course of a conversation which he had with Caitanya he was charmed with the excellence of the latter's doctrine and became his disciple under the name of Prabodhānanda Sarasvatī

**Beginning.** श्रीश्रीकृष्णचैतन्यचन्द्राय नमः ।

यस्यैव पादाम्बुजभक्तिलभ्य
प्रेमाभिधानः परमः पुमर्थः ।
तस्मै जगन्मङ्गलमङ्गलाय
चैतन्यचन्द्राय नमो नमोस्तु ॥ १ ॥

यन्नाप्तं कर्म्मनिष्ठैर्न समधिगतं यत्तपोध्यानयोगै-
र्वैराग्यत्यागतत्त्वस्तुतिभिरपि न यत् तर्कितं चापि कैश्चित् ।
गोविन्दप्रेमभाजामपि न च कलितं तद्रहस्यं स्वयं तन्
नाम्नैव प्रादुरासीदवतरति परे यत्र तं नौमि गौरम् ॥ २ ॥

उच्चैरास्फालयन्तं करचरणमहो हेमदण्डप्रकाण्डौ
बद्ध श्रीकृष्ण नामाक्षरलसितनं पुण्डरीकायताक्षम् ।
विश्वस्यामङ्गलघ्नं किमपि हरिहरीनृत्यतानन्दनादै-
र्वन्दे तं देवचूडामणिमतुलरसाविष्टचैतन्यचन्द्रम् ॥ ३ ॥

दृष्टः स्पृष्टः कीर्तितः संस्मृतो वा
दूरस्थैरप्यानतो वादृतो वा ।
प्रेम्णः सारं दातुमीशो य एकः
श्रीचैतन्यं नौमि देवं दयालुम् ॥ ४ ॥

धर्मास्पृष्टः सततपरमाविष्ट एवात्यधर्मे
दृष्टिं प्राप्तो न च खलु सतां सृष्टिषु क्वापि नो सन् ।
यद्दत्तश्रीहरिरससुधास्वादमत्तः प्रनृत्य-
त्युच्चैर्गायत्यथ विलुठति स्तौमि तं कञ्चिदीशम् ॥ ५ ॥

